[आरग्वधादियोगः]

आरग्वधग्रन्थिकतिक्तमुस्ता-
हरीतकीभिः क्वथितः कषायः ।
सामे सशूले कफवातयुक्ते
ज्वरे हितो दीपनपाचनश्च ॥ २९ ॥

[द्राक्षादियोगः]

द्राक्षामृतापर्पटिका[1]ब्दतिक्ता-
[2]क्वाथं सशम्याकफलं विदध्यात् ।

---

अरुचिज्वरे, पार्श्वशूलकरे ज्वरे एष एव क्वाथः प्रशस्यते । न केवलं प्रोक्तज्वरे इष्यते । त्रिदोषप्रभवेऽपि इष्यते । वातपित्तश्लेष्मोत्थेऽपि अतिश्रेष्ठः । क्षुद्रादियोगः ॥ २८ ॥

आरग्वधः [3]कीरवालः शम्याकः । ग्रन्थिकं पिप्पलीमूलं । तिक्त कटुकी । मुस्ता प्र० । हरीतकी प्र० । एभिः [4]पञ्चभिर्द्रव्यैः कृतः कषायः । [5]पीते सति किं करोति । सामज्वरे सशूले शूलसहिते ज्वरे आमदोषलक्षणज्वरे श्लेष्मवातोत्पन्ने द्वंद्वजज्वरे अयं योगो हितः । दीपन-पाचनश्च—विनष्टाग्नि [दीपनं] करोति यस्स दीपनः यथाश्रुतः । आमं पचति [यः] स पाचन उच्यते । यथा लङ्घनम् । कः आमः । अयं पुनः आरग्वधादियोगः ॥ २९ ॥

द्राक्षा प्र. । अमृता प्र. । पर्पटकः प्र. । [6]अब्दा मुस्ता । तिक्ता कटुका शम्याकफलं [7]कीरवालफलाभ्यन्तरद्रव्यं च क्षिपेत् । [8]एभिर्द्रव्यैः

---

[1] ब्ज–आ.
[2] क्वाथस्थ–अ, क्वाथः स–आ, ख
[3] कारवालः–आ.
[4] चतुर्भिर्द्रव्यैः–अ.
[5] चे ते–अ.
[6] आभा–अ.
[7] कृतमाल–आ.
[8] [illegible]–अ.

प्रलापमूर्च्छाश्रमदाहशोष-
[1]तृष्णान्विते पित्तभवे ज्वरे[2] च ॥ ३० ॥

[ निदिग्धिकादियोगः ]

निदिग्धिकानागरिकामृतानां
क्वाथं [3]पिबेन्मिश्रितपिप्पलीकम् ।
जीर्णज्वरारोचककासशूल-
श्वासाग्नि[4]मांद्यार्दितपीनसेषु ॥ ३१ ॥

---

कृतं कषायं शीतलं कृत्वा पिबेत्। प्रलापे, मूर्च्छायां *श्रमे च दाहे अङ्गशोषे च। तृष्णायां पित्तोद्भवे च ज्वरे सति अयं योगः श्रेष्ठः। द्राक्षादियोगः ॥ ३० ॥

निदिग्धिका सिंही[5]। नागरा शुण्ठी, अमृता गुडूची। एतै स्त्रिभिर्द्रव्यैः कृतं कषायं[6] पिप्पलीनां [शाणचूर्णं] क्षिपेत्। कोष्णं पिबेत्। जीर्णज्वरे,— बहुदिवसज्वरे, अरोचके अरुचौ, कासे च शूले च, श्वासे

---

* मूलग्रन्थे भ्रम इति पठ्यते। टीकायां 'श्रम' इति पदं गृहीतं सत् तस्यौचित्यानौचित्यं ज्ञातुं वैद्या एव समर्थाः।

---

[1] तृषार्दिते--अ, आ, ई, क, ख. [2] वा--ई.

[3] पिचेन्माक्षितपिप्पलीनाम्--अ, पिबेनिश्रितपिप्पलीनाम्--आ, पिबेन्मिश्रितपिप्पलीनाम्--ख, ग. [4] ग्रहणीगदेषु-अ

[5] रिंगणीनिलसूलक--अ. [6] पिप्पलीना शाणं चूर्णं-अ.

[ दुरालभादियोगः ]

दुरालभा[1]पर्पटकप्रियङ्गुभूनिम्बवासाकटुरोहिणीनाम् ।
क्वाथं पिबेच्छर्करयाऽवगाढं तृष्णास्रपित्तज्वरदाह[2]युक्ते ।' ३२ ॥

भूनिम्बदारुदशमूलमहौषधाब्ज-
तिक्तेन्द्रबीजधनिकेभकणाकषायः ।

---

च, ऊर्ध्वश्वासे च, । अर्दिते पीडिते च एभिर्व्याधिभिः । पीनसे* दुष्ट-प्रतिश्याये । एकं सान्द्रतां[3] प्राप्तं पीनस उच्यते । निदिग्धिकादियोगः ॥

दुरालभा यवासा । पर्पटकः प्र० । प्रियङ्गुः प्र० । भूनिम्बः प्र० । वासा आटरूषकः । कटुरोहिणी तिक्ता । एषां [4]षड्द्रव्याणां क्वाथं कृत्वा शर्करया सह पिबेत् । तृष्णाज्वरे रक्तोद्गारपित्तज्वरे दाहज्वरे अत्युत्तमः ॥

भूनिम्बः किराततिक्तः । दारु देवदारु । दशमूलं पूर्वोक्तम् । महौषधा शुण्ठी । [5]अब्जो मुस्ता । तिक्ता कटुकी । इन्द्रबीजं इन्द्रयवः ।

---

* दुष्टप्रतिश्यायलक्षणं यथा—

सर्व एव प्रतिश्यायाः दुष्टतां यान्त्युपेक्षिताः ।
यथोक्तोपद्रवाधिक्यात् स सर्वेन्द्रियनाशनः ।
साग्निसादज्वरश्वासकासोरःपार्श्ववेदनः ।
कुप्यत्यकस्मात् बहुशो मुखदौर्गन्ध्यशोफकृत् ।
नासिकाक्लेदसंशोषशुद्धिरोधकरो मुहुः ।
पूयोपमासितारक्तग्रथिता श्लेष्मसंस्रुतिः ।
मूर्च्छन्ति चात्र कृमयो दीर्घस्निग्धसितारणवः ॥

(अ. हृ. १९-९-१२)

---

[1] पर्पटकमुस्ता–ई.  [2] युक्तः–अ, इ, ई, क, ख, ग.
[3] प्राप्तनसोच्यते–अ.  [4] कटुद्रव्याणां–अ.

तन्द्रीप्रलापश्वसनारुचिदाहमोह-
[1]श्वासान्वितं त्रिजमपि ज्वरमाशु हन्ति ॥ ३३ ॥

इति ज्वरचिकित्सा

---

— अतिसारचिकित्सा —

सवत्सकस्सातिविष[2]स्सबिल्व
रसोदीच्यमुस्तैश्च कृतः कषायः ।
[3]सामे च शूले च सशोणिते च
चिरप्रवृत्ते च हितोऽतिसारे ॥ ३४ ॥

---

धनिका कुस्तुम्बरी । इभकणा [4]गजपिप्पली । [5]एतेषामष्टादशौषधानां कषायोऽष्टावशेषः सर्वज्वरसन्निपातमाशु हन्ति ॥ ३३ ॥

इति ज्वरचिकित्सा ।

सवत्सकः कुटजस्थली । अतिविषा प्र० । बिल्वं बालबिल्वफलम् । उदीच्यः वालुकम् । मुस्ता प्र० । एतेषां द्रव्याणां कृतः क्वाथः सामे, आमातिसारे सशूले सव्यथे, [7]सशोणिते सरक्ते चिरप्रवृत्ते दीर्घकालप्रवृत्ते अतिसारे हितः ॥ ३४ ॥

---

[1] श्वासान्वित दुष्टगदं निहन्ति–आ.
[2] स्सबीजः–आ.
[3] सामे सशूले सहशोणिते–अ. सामे सशूले स च शोणिते -ख, समेहशूले . . . . -ग.
[4] गजवे–अ.
[5] एतेषामष्टौष–अ.
[6] सर्वोखिते–अ.

[ धान्यपंचककषायः ]

[1]धान्यनागरमुस्तं च ह्युशीरं बिल्वमेव च ।
आमशूलविबन्धघ्नं पाचनं वह्निदीपनम् ॥ ३५ ॥

[ सल्लकीयोगः ?]

सल्लकीबदरीजम्बू[2]पिप्पलाम्रार्जुनत्वचः ।
पीत्वा क्षीरेण मध्वाढ्याः पृथक् शोणितनाशनाः ॥ ३६ ॥

[ शुण्ठ्यादिकषायः ]

शुण्ठीं समुस्तातिविषां[3]गुडूचीं
[4]पिबेज्जलेन क्वथितां समांशम् ।
मन्दानलत्वे [5]सततामयाना-
मामानुबन्धे ग्रहणीगदे च ॥ ३७ ॥

---

धान्यपञ्चको ज्वरातिसारे देयः ॥ ३५ ॥

एतेषां वृक्षाणां त्वग्रसः पृथक् पृथक् शोणितनाशने गोदुग्धेन मधुयुक्तः रक्तातिसारे देयः ॥ ३६ ॥

शुण्ठी । मुस्ता । अतिविषा प्र० । गुडूची । एभिश्चतुर्भिर्द्रव्यैः समभागेन कृतं कषायं पिबेत् । पीते सति किं करोति । मन्दाग्नौ च, अनवरतमामदोषे च, ग्रहणीदोषे च हितः ॥ ३७ ॥

---

[1] तथा निशानागरमुस्तकं च उशीरजंबीरमृणालमेव च–ग.

[2] प्रियला–आ, ख, ग.

[3] गल्लच्य–ग.

[4] सहज्वलं च–ग.

[5] सततमया–ग.

[ अजमोदादियोगः ]

अजमोदा मोचरसस्सशृङ्गि[1]वेरं च धातकीकुसुमम् ।
गोमथितेन [2]हि पीतं गङ्गामपि वाहिनीं निरुन्ध्यात् ॥ ३८ ॥

— शोफचिकित्सा —

[ पुनर्नवादिकषायः-१ ]

पुनर्नवादार्वभयागुडूची:
पिबे[3]त्समूत्रं [4]महिषाक्षियुक्ताः ।
त्वग्दोष[5]शोफोदरपाण्डुरोग-
स्थौल्य[6]प्रसेकोर्ध्वकफामयेषु ॥ ३९ ॥

---

अजमोदा प्र० । मोचरसः शाल्मलीनिर्यासः ।[7] शृङ्गिवेरं शुण्ठी । धातकीकुसुमं प्र० । एनानि द्रव्याणि गोतक्रेण पिबेत् । पीते सति किं करोति । *गङ्गामहापूरसमानं उदरप्रवाहं स्तम्भयति ॥ ३८ ॥

पुनर्नवा वर्षाभूः । दारु देवदारु । अभया हरीतकी । गुडूची प्र० । पिबेत् समूत्रं, गोमूत्रेण युक्तम । एतानि द्रव्याणि, महिषाक्षयुक्तं, गोमूत्रेण क्वथितं, पिबेत् । पीते सति किं करोति । त्वग्दोषे कुष्ठे । शोफे शूनाङ्गे । गात्रस्य पाण्डुतायां । स्थौल्ये स्थूलभावशरीरे । प्रसेके

---

* अनेन कर्ताऽस्य योगस्य बलीयस्त्वं प्रतिपादयति ।

---

[1] बेरः–ख,
[2] सम्प्रयुक्तो–ख.
[3] त्समूत्रा–आ, त्समक्तं–इ, ख.
[4] महिषाक्ष–ग.
[5] शोभोदर–आ.
[6] प्रतिश्याय–अ, क.
[7] [illegible]

[ पुनर्नवादिकषायः–२ ]

पुनर्नवानिम्बपटोलशुण्ठी-
तिक्तामृतादार्वभयाकषायः ।
सर्वाङ्गशोफोदरपाण्डुरोग-
श्वासान्वितं दुष्टगदं निहन्ति ॥ ४० ॥

— क्रिमिचिकित्सा —

[ मुस्तादिकषायः ]

[1]मुस्ताखुपर्णीफलदारुशिग्रु-
क्वाथः [2]सकृष्णः क्रिमिशत्रु[3]कल्कः ।

---

श्लेष्मकोपादतिशयेन निष्ठीवने। ऊर्ध्वश्वासे कफामयेषु अन्येषु चोदररोगेषु श्रेष्ठः ॥ ३९ ॥

पुनर्नवा वर्षाभूः। निम्बः प्र०। पटोलः प्र०। शुण्ठी प्र०। तिक्ता कटुका। अमृता गुडूची। दारु देवदारु। अभया हरीतकी। एतेषां कषायं कृत्वा पिबेत्। सर्वाङ्गशोफः सर्वाङ्गशूनता। उदरव्याधिः। पाण्डुरोगो गात्रस्य पाण्डुता। श्वासान्वितं ऊर्ध्वश्वासं दुष्टरोगं निहन्ति ॥ ४० ॥

मुस्ता प्र०। आखुपर्णी। फला त्रिफला। दारु देवदारु शिग्रु बकुलपल्लवः ?। एतैर्द्रव्यैः कृतः कषायः, सकृष्णः पिप्पलीप्रति

---

[1] मुस्ताखुपर्णि–अ, मुस्ताखुपर्णी–ग. [2] सकृष्णा–आ.
[3] कल्पः–आ, ई.

मार्गद्वयेनापि चिर[1]प्रवृत्तान्
क्रीमीन्निहन्ति क्रिमिजांश्च [2]दोषान् ॥ ४१ ॥

[ क्रिमिलक्षणम् ]

ज्वरो विवर्णता शूलः हृद्रोगः स्वेदनं भ्रमः ।
*भक्तद्वेषोऽतिसारश्च [3]सञ्जातक्रिमिलक्षणम् ॥ ४२ ॥

[ खदिरादियोगः ]

खदिरः कुटजः पिचुमन्दवचा
त्रिकटुत्रिफलात्रिवृतासहितम् ।

---

पाकयुक्तः क्रिमिशत्रुकल्कः । [4]मार्गद्वयेनापि चिरप्रवृत्तात क्रिमीन् निहन्ति मुखेन गुदेन च प्रवृत्तान् महाक्रिमीन् । तद्रोगजान् विनाशयति ॥ ४१ ॥

क्रिमिलक्षणं चोच्यते ॥ ४२ ॥

खदिरः दन्तधावनः । कुटजः इन्द्रयवः । [5]पिचुमन्दः निम्बत्वक् । वचा प्र० । त्रिकटुः प्र० । त्रिफला प्र० । [6]त्रिवृता सर्वानुभूतिः ।

---

* भक्तोऽन्नं तस्मिन् द्वेषः अरुचिनिमित्तकं वैरं तच्च क्रिमिकृतम् ।

---

1 प्रवृत्ते–आ, ख.     2 रोगान्–ई.

3 सञ्जात–ख.

4 'आमयास्य आयुमया अस्य' इति–अ, आ., आमयाश्च इति–ख., मार्गद्वयेनापि इति पदपूर्वभागे दृश्यते ।

5 कोडतचक इति–आ, ख, एतत्पदपूर्वं पठतः.

6 तेल्लतिगड इति अधिकं–आ, तिशोधतियडा इति ख.

पशुमूत्रयुतं पिब सप्तदिनं
क्रिमिकोटिशतान्यपि नाशयति ॥ ४३ ॥

— प्रमेहचिकित्सा —

[ फलत्रिकादियोगः ]

फलत्रिकं दारुनिशाविशाला-
[1]मुस्ताश्च निष्क्वाथ्य निशान्तकल्कम् ।
पिबेत्कषायं [2]सितया प्रयुक्तं
सर्वप्रमेहेषु समुत्थितेषु ॥ ४४ ॥

— मूत्रकृच्छ्रचिकित्सा —

[ एलादिकषायः ]

एलोपकुल्या मधुकाश्मभेद-
[3]कौन्तीश्वदंष्ट्रावृषकोरुबूकैः ।

पशुमूत्रयुतं छागमूत्रयुतं पिष्ट्वा । पिब सप्तदिनं, क्रिमिकोटिशतान्यपि नाशयति । एषां च [4]बहुच्छेदात्क्रिहन्ति । खदिरादियोग ॥ ४३ ॥

फलत्रिकं त्रिफला । दारु देवदारु । निशा हरिद्रा । विशाला इन्द्रवारुणी । मुस्ता प्र० । निशा दारुहरिद्रा । निष्क्वाथ्य कषायं कृत्वा । सितया शर्करया सहितं पिबेत् । कस्मिन् व्याधौ । सर्वप्रमेहेषु समुत्थितेषु ॥ ४४ ॥

एला प्र० । उपकुल्या पिप्पली । मधुका यष्टिमधुकं । अश्मभेदः पाषाणभेदकः । कौन्ती रेणुका श्रवणद्रव्यम् ? । श्वदंष्ट्रा गोक्षुरकः ।

[1] मुस्तं च निष्क्वाथ्य निशां च कल्कम्–इ. [2] मधुना–इ.
[3] कान्ती–ई. [4] बहुभेदान्–अ.

क्वाथं पिबे[1]दश्मजितुप्रधानं
सशर्करं साश्मरि[2]मूत्रकृच्छ्रे ॥ ४५ ॥

[ हरीतक्यादियोगः ]

हरीतकीगोक्षुरराजवृक्ष-
पाषाणभिद्धन्वयवासकानाम् ।
क्वाथं पिबेन्माक्षिकसम्प्रयुक्तं
कृच्छ्रे सदाहे सरुजे [3]विबन्धे ॥ ४६ ॥

---

वृषकः आटरूषकः । उरुबूकः एरण्डमूलम् । एभिर्द्रव्यैः क्वाथं पिबेत् जलप्रधानं कृत्वा शीतलम् । अश्मजितुप्रधानं शिलाजितु[4]प्रतिपाकं । सशर्करं शर्करया सहितं । अश्मरिदोषं मूत्रकृच्छ्रदोषं नाशयति ॥ ४५ ॥

हरीतकी अभया । गोक्षुरः गोकण्टकः । राजवृक्षः आरग्वधः । पाषाणभित् पाषाणभेदकः । धन्वय-[5]कीरवालः तस्य फलनिर्यासकल्कः । पाषाणभित् पाषाणभेदकः । धन्वय-वासकं दुरालभा । एतेषां द्रव्याणां, क्वाथं पिबेन्माक्षिकसम्प्रयुक्तं, मधुसंयुक्तं पिबेत् । कस्मिन् व्याधौ । कृच्छ्रे महाकष्टेन मूत्रकृच्छ्रे । स्रवणे सदाहे । अतिदह्यमानमूत्रस्रवणे । सरुजे तीव्रवेदनायां मत्रस्रवणे । विबन्धे अत्यन्त [6]निरोधे च, स्वल्पमूत्रस्रवणे च । एवमादि मत्रकृच्छ्रादि, हरीतक्यादियोगो नाशयति ॥ ४६ ॥

---

[1] दश्मजतु—ई.

[2] मूत्रकृच्छ्रैः—इ.

[3] सवन्धे—अ, आ, ई, क, ख.

[4] प्रापकं—अ

[5] किरवालः—अ.

[6] निबन्धे—अः

[ एलादिचूर्णम् ]

[1]एलाश्मभेदकशिलाजितुपिप्पलीनां
चूर्णानि तण्डुलजलैर्मधुना च पीत्वा ।
यद्वा गुडेन [2]सहितान्यवलिह्यमानोऽ
प्यासन्नमृत्युरपि जीवति [3]मूत्रकृच्छ्री ॥ ४७ ॥

— शोणितवातचिकित्सा —

[ वासादियोगः ]

[4]वासा[5]गुडूचीचतुरङ्गुलाना
मेरण्डतैलेन पिबेत्कषायम् ।

---

एला प्र० । अश्मभेदः पाषाणभेदकः । शिलाजितुः प्र० । पिप्पली । एतानि द्रव्याणि तण्डुलजलेन तण्डुलोदकेन पिबेत् । अथव गुडोदकेन सहायं योगः । आसन्नमृत्युरपि जीवति । मूत्रकृच्छ्री मूत्रा शर्करया पीडितोऽपि (क्षीणे कोपत्तीव ?) जीवति ॥ ४७ ॥

वासा आटरूषकः । गुडूची प्र० । चतुरङ्गुलं शम्याकम् (किराततिक्तकं भूनिम्बं ?) एरण्डतैलेन सह पिबेत् । पीते सति किं

---

1 वला–ई. 2 सहितामवलेह्यमाना–आ, सहितान्यवले...–ई.
3 मूत्रकृच्छ्रे–आ 4 वाशा–आ, इ.
5 गुडूची–ई.

क्रमेण सर्वाङ्गजमप्यशेषं
जयेदसृग्वात[1]भवं विकारम् ॥ ४८ ॥

— हृद्रोगचिकित्सा —

[ रुचकादियोगः ]

चूर्णं समं [2]रुचकहिङ्गुमहौषधानां
[3]शुण्ठ्यम्बुना कफसमीरणसम्भवासु ।
हृत्पार्श्वपृष्ठजठरार्ति[4]विषूचिकासु
[5]देयं तथा यवरसेन च विड्विबन्धे ॥ ४९ ॥

करोति । क्रमेण बहुदिवसैः सर्वाङ्गव्याप्तं वायुविकारं चिरकालं रक्तसमेतं निहन्ति ।[6] वासादियोगः ॥ ४८ ॥

चूर्णं समं समभागं । रुचकं सौवर्चलं । हिङ्गु प्र० । महौषधं शुण्ठी । शुण्ठ्यम्बुना, शुण्ठीक्वाथेन सह पिबेत् । पीते सति किं करोति । कफसमीरणसम्भवासु, हृत्हृदयपार्श्वपृष्ठशूलं जठरे च, येषामर्तिः पीडा विषूचिका, अन्नविकारः, एषु देयम । तथा यवरसेन यवक्वाथेन सह च विड्विबन्धे विष्ठासङ्ग्रहे दद्यात् ॥ ४९ ॥

---

1 भयं–ख.
2 रुचिक–इ
3 शान्त्यम्बुना–ई.
4 विषूचिकुक्षि–अ, क, ख.
5 पेयं–इ.
6 वाशादियोगः–आः

— असृग्दरचिकित्सा —

[ रसाञ्जनयोगः ]

रसाञ्जनं [1]तण्डुलिकस्य मूलं
[2]क्षौद्रान्वित तण्डुलतोय[3]पीतम् ।
[4]असृग्दरं सर्वभवं निहन्ति
श्वासं च [5]भार्ङ्गी सह [6]नागरेण ॥ ५० ॥

[ एरण्डादिकषायः ]

एरण्डबिल्वबृहतीद्वयमातुलुङ्ग-
[7]पाषाणभित्त्रिकटुमूलकृतः कषायः ।

---

रसाञ्जनं तार्क्ष्यशैलं । तण्डुलिकस्य मूलं । क्षौद्रान्वितं मधुसमेतं । तण्डुलतोयपीतं तण्डुलोदकेन पीते सति । किं करोति । [8]असृग्दरं असृक् शोणितं, तच्च दारयतीति असृग्दरमहारक्तमित्यर्थः । स्त्रीणां विशेषः । सर्वभवं वातपित्तश्लेष्मसन्निपातभवं निहन्ति । भार्ङ्गी सह नागरेण शुण्ठ्या सह उष्णोदकेन[9] पीता श्वासं हन्ति ॥ ५० ॥

एरण्डमूलं प्रसिद्धम् । बिल्वं बिल्वमूलं । गोक्षुरमूलं । पिप्पलीमूलं, वह्निमूलं । एषां कृतः कषायः । सक्षारः, यवक्षारसहितः । हिङ्गु सैन्धवसहितं उरुबु, एरण्डतैलमिश्रं पिबेत् । पीते सति किं करोति । श्रोणी

---

[1] तण्डुलितस्य–अ.
[2] द्राद्रान्वितं–ई.
[3] पेतम्–अ, इ, क.
[4] असृग्गदं–आ, असृग्धरं–ई.
[5] भाज्या–अ, भार्या–ई.
[6] सागरेण–ई.
[7] [illegible]–ई.
[8] असृग्गदं–आ.
[9] सरित -अ.

सक्षारहिङ्गु[1]लवणोरुबुतैलमिश्रं
श्रोण्यूरुमेढ्रहृदयस्तनरुक्प्रबन्धे ॥ ५१ ॥

— गुल्मचिकित्सा —

[ पूतीकपत्रादिलवणम् ]

[2]पूतीकपत्रगज[3]चर्भटिचव्यवह्नि-
व्योषं च संस्तरचितं [4]लवणप्रधानम् ।
दध्ना [5]विचूर्ण्य दधि[6]मस्तुयुतं प्रयोज्यं
गुल्मोदरश्वयथुपाण्डुगुदोद्भवेषु ॥ ५२ ॥*

कटिप्रदेशः । [7]ऊरुमेढ्रहृदादयः । सर्वदा उपशाम्यन्ति । विड्विबन्धे विष्ठासङ्ग्रहे ॥ ५१ ॥

पूतीकपत्राणि[8] चिरबिल्वपलाणि, करञ्जपत्राणि । गजचर्भटी इन्द्र-वारुणी । चव्यं चविका (श्रवणद्रव्यम् ?) वह्निः चित्रकः । व्योषं त्रिकटुकं, मरीचशुण्ठीपिप्पली । एतानि सप्त द्रव्याणि समभागानि गृहीत्वा। लवणप्रधानं, सैन्धवं प्रक्षिप्य । एतत्करञ्जादि द्रव्यजातं [9]संस्तरचितं †संस्तरा-

---

* 'ख' प्रतौ एतदनन्तरं ग्रन्थो नास्ति ।

† संस्ताराकारे दग्ध्वेति ज्ञेयम् ।

---

1 लवणोरुकतैलमिश्रः—इ.

2 पूतीक—इ.

3 चिभंटि—इ.

4 लवणे—ख.

5 पिचूर्ण्य—ई.

6 मुत्त—ख.

7 ऊरुमेद्रे गुदादयः—अ.

8 चिरि—अ.

9 सप्तरचितं—अ.

## — श्वासरोगचिकित्सा —

### [ शृङ्गयादिचूर्णम् ]

*शृङ्गी कटुत्रिकफल[1]त्रिककण्टकारि-
भार्ङ्गी[2]सुपौष्करजटी लवणानि पञ्च ।
चूर्णं पिवेदशिशिरेण जलेन [3]हिक्का-
श्वासोर्ध्ववातकसनारुचिपीनसेषु ।। ५३ ।।

---

कारे तत्सर्वं चूर्णं कृत्वा दधिमस्तुयुते दध्यन्तजरलेन सह प्रयोज्य, पिवेत् । केषां व्याधीनां, गुल्मोदरश्वयथुपाण्डुगुदोद्भवेषु अत्युत्तमम् ।। ५२ ।।

शृङ्गी कर्काटकशृङ्गी । कटुत्रिकं त्रिकटुकं । फलत्रिकं त्रिफला । कण्टकारी व्याघ्री । भार्ङ्गी प्र० । पुष्करजटा, एरण्डमूलम् । अन्यच्च लवणानि पञ्च । अत्र पञ्चलवणानि गृह्यन्ते सैन्धवं, सौवर्चलं, [4]विडालवणं, चूलिकालवणं, सामुद्रलवणञ्चेति । एतेषां समभागेन चूर्णं कृत्वा । अष्टावशेषितं । अशिशिरेण जलेन, उष्णोदकेन । पिवेत् । केषु । हिक्का श्वासोर्ध्व[5]वातकसनवातश्वासकासारोचकेषु श्रेष्ठः ।। ५३ ।।

---

* 'अ' प्रतौ श्लोकोऽयं न दृश्यते ।

---

[1] त्रय–इ. [2] सपुष्करजटा–इ, ई, क.

[3] हित्वा–आ. [4] विडाल–आ.

[5] वातप्रकसन–अ, वातरसकम–आ.

[ नादेय्यादिक्षारः ]

[1]नादेयीकुटजार्कशिग्रुबृहतीस्नुग्विल्व [2]भल्लातकी-
व्याघ्री[3]किंशुकपारिभद्रकजटाऽपामार्ग[4]नीपाग्निकैः ।
वासामुष्ककपाटला सलवणं दग्ध्वा रसं पाचितं
हिङ्ग्वादि[5]प्रतिवापमेतदुचितं[6] गुल्मोदराष्ठीलिषु ॥ ५४ ॥

नादेयी कोकिलाक्षं, जलजाम्बु । कुटजं इन्द्रयवः । अर्कः प्र० । शिग्रुः प्र० । बृहतीद्वयं च । स्नुक् स्नुही ।[7] विल्वं प्र० । भल्लातक श्च । व्याघ्री वरहंसकोला व्याघ्रनखी । करञ्जश्च ? । पारिभद्रकजटा निम्ब मूलं ? । अपामार्गः आघाडकः । नीपः कदम्बः । अग्निः चित्रकः । वासा आटरूषः । [8]मुष्कको [9]मोषावृक्षः । पाटला वसन्तदूती । लवणानि पञ्च पञ्चलवणं । [10]एकस्मिन् भाण्डे निधाय अष्टगुणं जलं दत्वा अष्टा-वशिष्टं क्वाथयेत्[10] । सर्वाणि दग्ध्वा यत्र यद्भस्म तत्र जलं प्रक्षिप्य पुनः पाचयेत् । पुनस्त्रिभागावशेषं जलं वस्त्रेण निष्पीड्य परिगृह्य तत्र हिङ्ग्वादि प्रतिपाकः । अत्र पठितः हिङ्गूग्रगन्धादियोगः । प्रतिपाकं प्रक्षिप्य पिबेत् । एतद्गुल्मे च उदरव्याधौ च, अष्ठीलादोषे च वातदोषे च । वातदोषे तद्ग्रन्थिः ॥ ५४ ॥

1 नादेया—आ.
2 भल्लातक—ई
3 चम्पक—आ, आ.
4 नीपाग्निकान्—ई
5 प्रतिपाक—अ, आ, ई, क.
6 गुल्मोदराष्ठीलिषु—आ.
7 'निपडङ्ग बोत्त कल्लि' इत्यधिकः भाषान्तरपाठः ।
8 मूषिको—अ.
9 महावृक्ष—आ.
10 एका भाण्डान्त घालून समग्रे चळिचेतिते चाराष्टगुणा पाणी घालूए त्रिभागवुरेतवें कडषिचें इति मराठी भाषा ।

[ मूर्वादि–पञ्चाग्निचूर्णविधानम् ]

मूर्वाम्लिकादहनसूरणवह्निकानां
तक्रेण चूर्णमुषसि प्रविलोड्य[1] पीतम् ।
[2]अष्ठीलगुल्म[3]गुदकीलभगन्दराणां
[4]पञ्चाग्निनाम जठराग्निकरं नराणाम् ॥५५॥

[ नागरादिवटी ]

नागरपिप्पलिचित्रविलङ्गं पूतिकरञ्जहरीतकि[5]युक्तम् ।
[6]शर्करया घुटिकां कुरु भक्ष ह्यग्निकरं वडवानलचूर्णम् ॥ ५६ ॥

---

मूर्वा मधुरसा । अम्लिका चिञ्चाफलं । दहनश्चित्रकः । सूरणः अर्शोघ्नः । वह्निका चिरबिल्वचूर्णम् । एतेषां चूर्णानि आलोड्य तक्रेण उषसि प्रभाते पीते सति किं करोति । जठराग्निकरं, अष्ठीलिका—उदराभ्यन्तरग्रन्थिसमूहं गुल्मगुदकीलकं, [7]अर्शोविकारं, अतिभगन्दरं हन्ति । भगन्दरमिति किम् ? गुदप्रदेशेषु यद्व्रणम् ॥ ५५ ॥

नागरा शुण्ठी । पिप्पली प्र० । चित्रकश्च । विळङ्गानि । पूतिकरञ्जः । हरीतकी च । सम्यक् समभागेन । शर्करया घुटिकां कुरु भक्ष। हीति कस्मात् । अग्निकरं उदराग्निवर्धनं । वडावानलोऽग्निः, [8]तद्वत्तीव्रं भवति ॥ ५६ ॥

---

[1] पीत्वा—आ [2] आष्ठील—क.
[3] गुदकीर—क. [4] वपचाग्नि—अ.
[5] सम्यक्—आ. [6] शर्करया घुटिकाकृतमेतत्—अ.
[7] [illegible]—अ. [8] तद्वत्तिर—अ.

[ सामुद्रादिचूर्णम् ]

सामुद्रसौवर्चलसैन्धवानां क्षारो यवानामजमोदभागाः ।
हरीतकीपिप्पलिश्रृङ्गिबेरहिङ्गूविळङ्गं च [1]समानभागाः ॥५७॥

एतानि चूर्णानि घृतप्लुतानि भुञ्जीत पिण्डान् प्रथमं च पञ्च ।
अजीर्णवातं गुदगुल्मवातं वातप्रमेहं विषमं च वातम् ।
विषूचिकाकामिलपाण्डुरोगान् श्वासं च कासं च हरेत्प्रयुक्तम् ॥

[ हिङ्ग्वष्टकचूर्णयोगः ]

त्रिकटुकमजमोदा सैन्धवं जीरके द्वे
समधरणधृतानामष्टमो हिङ्गुभागः ।

---

सामुद्रं सामुद्रकं । सौवर्चलं, सैन्धवं, एतल्लवणत्रयं। क्षारो यवानां, यवक्षारः । एतेषां चूर्णम् । एकैकभागेन चतुर्भागा भवन्ति। अजमोदाभागाश्चत्वारः । एतेषां चतुर्णां समानः । हरीतकी, पिप्पली च श्रृङ्गिबेरं शुण्ठी च हिङ्गु च विळङ्गानि च [2]समानं दद्यात् । समभागानि गृहीत्वा, ॥ ५७ ॥

एतानि समभागानि चूर्णयित्वा टिण्टुकप्रमाणं गृहीत्वा प्रथमपञ्चग्रासेषु मिश्रितं कृत्वा पञ्च ग्रासान् भुञ्जीत । अजीर्णवातं, गुदगुल्मवातं, अर्शोवातं वातप्रमेहं च विषमवातं च विषूचिकाऽजीर्णं च। कामिलं नेत्रयोः पीतभावः । पाण्डुरोगं च, श्वासं च कासं च विनाशयति ॥ ५८ ॥

त्रिकटुकं प्र० । [3]अजमोदा सैन्धवं च जीरकद्वयं च। हिङ्गु च स चाष्टमः। एतान्यष्टौ द्रव्याणि समभागानि योज्यानि। [4]अक्षप्रमाणं गृहीत्वा

---

1 समानभागः--क.
2 समभागेन--आ.
3 अजमोदं--अ.
4 अक्षप्रमाणं--अ.

प्रथमकवल[1]भोगात्सर्पिषा चूर्णमेतत्
जनयति जठराग्निं वातगुल्मं निहन्ति ॥ ५९ ॥*

[ चव्यादिप्राणदयोगः ]

चव्याम्लवेतसकटुत्रिक[2]तिन्त्रिडीक-
तालीसजीरक[3]तुगादहनैस्ससमांशैः ।
चूर्णं [4]गुडप्रमृदितं त्रिसुगन्धयुक्तं
[5]वैस्वर्यपीनसकफारुचिषु प्रशस्तम् ॥ ६० ॥†

---

सर्वेषां अर्दयित्वा इदंप्रथमकवले क्षिप्य भुज्यते । भुक्त सति किं करोति, प्रबलयति हुताशम् । वातगुल्मं निहन्ति ॥ ५९ ॥

चव्या चविका । अम्लवेतसः प्र० । त्रिकटुकं, तिंत्रिडीकं, श्रवणद्रव्यं ? तालीसपत्रं । जीरकं । [6]तुगा वंशरोचना, तदभावे त्वक्षीरं । दहनश्चित्रकः । एतानि द्रव्याणि [7]समभागेन चूर्णयित्वा, गुडेन मर्दयित्वा ।

---

* 'इ' प्रतौ श्लोकोऽयं न दृश्यते ।

† 'ई' मातृकायां अस्य तथा चोत्तरत्र दृश्यमान'तालीस'इति श्लोकस्य च स्थाने एक एव आहृत्य श्लोको दृश्यते यथा—

चव्याम्लवेतसकटुत्रिकतिन्तिडीकं
तालीसजीरकतुगादहनैस्समांशैः ।
चूर्णं गुडप्रमुदितं त्रिसुगन्धयुक्तं
श्वासाग्निमान्द्यगुडजज्वरमाशु हन्ति ॥

---

1 भुक्त्वा–अ. 2 तित्तिडीकं–क.
3 तुदागहनैः–ई 4 गुडप्रमुदिते–अ.
5 श्वासाग्निमान्द्यगुदजज्वरमाशु हन्ति–ई.
6 कुगा–अः 7 समभागानि–अ.

[ ताळिसादियोगः ]

ताळीसचव्यमरिचं सदृशं [1]द्विरंशं
मूलानुगं मगधजा [2]त्रिगुणा च [3]शुण्ठी ।
कृत्वा [4]गुडप्रमृदितं त्रिसुगन्धयुक्तं
[5]श्वासाग्निमान्द्यगुदज[6]ज्वरमाशु हन्यात् ॥ ६१ ॥

---

त्रिसुगन्धयुक्त एलालवङ्गपत्रसहितम्। इदं वटकं मुखे प्रक्षिप्यते। किं करोति, वैस्वर्यं स्वरभङ्गं पीनसं प्रतिश्यायं, [7]श्लेष्माणं चारोचकं च विनाशयति। प्राणदो नाम योगः ॥ ६० ॥

ताळीसपत्रं प्र० । चव्यं प्र० । मरिचं प्र० । सदृशं समभागं द्विरंशकं तत् । मूलानुगं पिप्पलिमूलम्। [8]मगधजा, पिप्पली च शुण्ठी च [9]त्रिगुणा । कृत्वा गुडप्रमृदितं, घुटिकां सुगमां त्रिसुगन्ध युक्ता एला-लवङ्गपत्रकसहितां मुखे धारयेत्। [10]श्वासाग्निमान्द्यगुदजज्वरमाशु हन्यात्।[10] कासः, मन्दाग्निः, अर्शोविकारे [11]ज्वरे च मुखव्यथायां अनुत्तमो योगः ॥ ६१ ॥

---

1 द्विरंशां–इ,
2 त्रिगुणां–ई.
3 शुण्ठीम्–ई.
4 गुडत्रिगुलितां गुलिकां त्रिगन्धां–इ
5 कासा–आ.
6 ज्वररुक्षु दद्यात्–ई.
7 श्लेष्मा च अकोचकं च–आ.
8 मगधा–आ.
9 त्रिगुणी–आ.
10 'आ' प्रतौ नास्ति ।
11 द्वारे–अ.

( योगराजगुग्गुलचूर्णम् )

[1]पिप्पलीपिप्पली[2]मूल[3]चव्यचित्रकनागरैः ।
पाठाविळङ्गेन्द्रयवहिङ्गुभार्ङ्गीवचान्वितैः ॥ ६२ ॥

मुस्ताचातिविषाजाजिरेणुकाकृष्णजीरकैः ।
गजकृष्णाजमोदाभ्यां कटुका[4]सुविमिश्रितैः ॥ ६३ ॥

समभागान्वितैरेतैस्त्रिफला त्रिगुणा भवेत् ।
त्रिफलासहितैरेतैस्समभागं च गुग्गुलम् ॥ ६४ ॥

[5]एतच्चूर्णीकृतं सर्वं मधुना च परिप्लुतम् ।
[6]योगराजमिदं विद्वान् भक्षयेत्प्रातरुत्थितः ॥ ६५ ॥

अर्शांसि वातगुल्मं च पाण्डुरोगमरोचकम् ।
कुष्ठं क्षयमपस्मारं हृद्रोगं ग्रहणीगदम् ॥ ६६ ॥

[7]रेतोदोषाश्च ये पुंसां योनिदोषाश्च योषिताम् ।
निहन्यादाशु तान् [8]सर्वान् दुर्वाराश्नात्र संशयः ॥ ६७॥

नैतस्य परिहार्यं स्यात्पानभोजनमैथुनम् ।
सतताभ्यासयोगेन वलीपलितनाशनम् ॥ ६८ ॥

॥ ६२, ६३, ६४, ६५, ६६, ६७, ६८ स्पष्टोऽर्थः ॥

1 पिप्पलिः–अ, पिप्पली:–क. 2 मूलं–ई, क.
3 चव्यं–क. 4 सम–अ.
5 एतच्चूर्ण कृत–अ, आ, इ, क. 6 यौगराज–अ, इ, ई, क.
7 रेतोहीना–आ. 8 दोषान्–अ.

[ अर्कतैलम् ]

अर्कं सकुष्ठं करवीरमूलं
भृङ्गं सतालं लवणं हरिद्रे ।
स्नुक्काण्डकं चैव समानि कृत्वा
तैलं [1]पचेन्मूत्रचतुर्गुणेन ॥ ६९ ॥

अनेन [2]कण्डूकटिभङ्गचर्म-
विचर्चिकादद्रुकमण्डलानि ।
अभ्यङ्गमात्रेण शमं व्रजन्ति
पापानि विष्णोः स्मरणादिवाशु ॥ ७० ॥

[ एलादियोगः समशर्करयोगः ]

शुण्ठीकणामरिचनागदलत्वगेलं
चूर्णीकृतं क्रमविवर्धित[3]भागमन्त्यात् ।

---

अर्कं अर्कमलम् । कुष्ठ प्र० । करवीरः प्र० । भृङ्गो मार्कवः । तालं हरितालम् । लवणं सैन्धवम् । हरिद्रे द्वे प्र० । [4]स्नुक् वज्री । एतानि समभागानि कृत्वा [5]द्रव्याच्चतुर्गुणं तैलं तैलचतुर्गुणं गोमूत्रमजामत्रं वा सम्यक्पक्त्वा । अनेनाभ्यङ्गमात्रेण त्वग्विकारो नश्यति ॥ ६९, ७० ॥

शुण्ठी । कणा पिप्पली । मरिचं बल्लिजम् । नागं नागकेसरम् । दलं तमालपत्रम् । त्वक् एला । चूर्णीकृतं सूक्ष्मचूर्णं कृत्वा । कथं

---

[1] वचेत्—अ, इ. [2] कण्डूकटु—अ.
[3] मूर्ध्वमन्त्यात्—अ. [4] निवडुङ्गः वोंकऋक्कि इत्यधिकः भाषान्तरपाठः—अ
[5] द्रव्यचतुर्गुण—आ.

[1]खादेदिदं समसितं गुदजाग्निमान्द्य-
गुल्मारुचिश्वसनकण्ठहृदामयेषु ॥ ७१ ॥

— अग्निमान्द्यचिकित्सा —

[ सैन्धवादियोगः ]

सिन्धूत्थहिङ्गुत्रिफलायवानी-
व्योषैर्गुडांशै[2]र्घुटिकाः प्रकुर्यात् ।
[3]तद्भक्षणात्तृप्तिमनाप्नुवानो
[4]भुञ्जीत मन्दाग्निरपि प्रभूतम् ॥ ७२ ॥

---

क्रमविवर्धितं, एकाद्येकोत्तरवृद्धं । ऊर्ध्वं उपर्युपरि । कस्मात् अन्त्याद्न्त्यस्थितात् एलास्थानकात् एलाभागैकं, त्वग्भागद्वयं, पत्रकं भागत्रयम् । एवं चतुःपञ्चसप्त भागाः । एतेषां सप्त द्रव्याणां प्रमाणं यत्तच्छर्करयाऽऽलोड्य एतच्चूर्णं भक्षयेत् । अर्शोविकारे, मन्दाग्नौ गुल्मे, अरोचके, ऊर्ध्वश्वासे' [5]कण्ठहृदयरोगेषु । एलादियोगः ॥ ७१ ॥

सिन्धूत्थं सैन्धवम् । हिङ्गु प्र० । त्रिफला प्र० । यवानी अजमोदा । व्योषं त्रिकटुकम् । एतेषां गुडांशैर्द्रव्याणां वटकान् बद्ध्वा भक्षयेत् । पुमान् तृप्तिं न प्राप्नोति । मन्दाग्निरपि प्रचुरं भुङ्क्ते ॥ ७२ ॥

---

[1] खादेतिमांस्सम–अ.
[2] घुटिकास्तु–इ, घुटिकां–ई, ग.
[3] तैर्भक्षितैरप्यनवाप्य तृप्ति–आ, तैर्भक्षितैस्तृप्तिमवाप्नुवन्ना–इ.
[4] भुङ्क्ते च–आ.
[5] कण्ठहृदारोगेषु–आ.

सिन्धूत्थ[1]पथ्यमगधोद्भववह्निचूर्ण-
मुष्णाम्बुना पिबति यः [2]किल नष्टवह्निः ।
तस्यामिषेण सघृतेन [3]नवं कथं न
भस्मीभवत्यशितमात्र[4]मपि क्षणेन ॥ ७३ ॥

— पाण्डुरोगचिकित्सा —

[ अयस्तिलादिमोदकः ]

अयस्तिलास्त्र्यूषणकोलभागैः
[5]सर्वैः समं माक्षिकधातुचूर्णम् ।
तैर्मोदकः क्षौद्र[6]युतोऽनुतक्रः
पाण्ड्वामये दूरगतेऽपि शस्तः ॥ ७४ ॥

---

सिन्धूत्थं प्र० । पथ्या हरीतकी । मगधोद्भवा पिप्पली । वह्निश्चित्रकः । [एतेषां] चूर्णमुष्णाम्बुना पिबेत् । किल शब्देन यः पिबेत् तस्य आमिषेण मांसेन । कोऽर्थः । नवभुक्तं क्षणेन परिणमति । अग्निं दीपयति ॥ ७३ ॥

अयो लोहचूर्णं । तिलाः कृष्णतिलाः । त्र्यूषणं त्रिकटुकम् । कोलभागैः पक्वबदरकल्कैः । सर्वे समभागा ग्राह्याः । माक्षिकधातुचूर्णं । तैः पूर्वोक्तद्रव्यभागैः समानं माक्षिकधातुचूर्णमित्यर्थः । कृतं मोदकैः सुगमं क्षौद्रयुतं शर्करया बध्यते । तान् भक्षयित्वा अनुलेपश्च, तक्रं पिबेत् ।

---

[1] पथ्या–ग.
[2] खलु–ई
[3] नव करोति–ग.
[4] मल–आ.
[5] सद्ये–ग.
[6] युतानुतन्त्रः–अ.

— अर्शश्चिकित्सा —

[ गुडपञ्चकयोगः ]

गुडने शुण्ठी[1]मथवोपकुल्यां
पथ्यातृतीयामथ दाडिमं वा ।
आमेष्वजीर्णेषु [2]गुदामयेषु
वर्चोविबन्धेषु च नित्यमिष्टम् ॥ ७५ ॥

— छर्दि चिकित्सा —

[ एलादिचूर्णम् ]

एलालवङ्गगजकेसरकोलमज्जा-
लाजाप्रियङ्गुघनचन्दनपिप्पलीभिः ।

---

केचिदाहुः, उष्णोदकं । पाण्डुरोगे दूरगतेऽपि शस्तं, अतितीक्ष्णेऽपि शस्तम् ॥ ७४ ॥

गुडेन पिप्पलीशुण्ठीत्रितयं भक्षयेत् । अथवा गुडेन शुण्ठीहरीतकीत्रितयं भक्षयेत् । अथवा गुडेन शुण्ठीदाडिमं वा भक्षयेत् । [3]अथवा गुडेन शुण्ठीपिप्पलीहरीतकीत्रितयं भक्षयेत् । यद्वा गुडेन हरीतकीदाडिमं भक्षयेत । आमे अजीर्णे अर्शोविकारे वर्चोविबन्धे विष्टम्भे नित्यमिष्टोऽयं योगः ॥ ७५ ॥

एला प्र० । लवङ्गः प्र० । राजकेसरं । कोलमज्जा बदरगुटिका । लाजाः शालिभ्रष्टधान्यविशेषः । प्रियङ्गुः । घनो मुस्ता ।

---

[1] मधवो–अ. [2] गुदा–अ.
[3] द्वा–आ.

[1]चूर्णीकृतं समसितं मधुना प्रयुक्तं
छर्दिं निहन्ति कफमारुतपित्त[2]दोषन् ॥७६॥

[ मनश्शिलादिचूर्णम् ]

मनश्शिला मागधि[3]कोषणानां
चूर्णं कपित्थाम्लरसेन युक्तम् ।
लाजै[4]स्समांशैस्सितयावलीढं
छर्दिं [5]प्रवृद्धामसकृन्निहन्ति ॥७७॥

---

चन्दनं रक्तचन्दनम् । पिप्पली । [6]एतान्यष्टौषधानि चूर्णीकृतानि । समसितं शर्करया समम् । मधुप्रयुक्तां छर्दिं नाशयति । श्लेष्मजं वात दोषं पित्तं च नाशयति ॥ ७६ ॥

मनश्शिला प्र० । मागधिका पिप्पली । ऊषणं मरिचम् । एतानि चूर्णयित्वा कपित्थाम्लरसेन युक्तं कृत्वा एतेषां समभागेन लाजास्संयोज्याः । शर्करया संलिहेत् । महाछर्दिं निहन्ति । *असकृत्सर्वम् ॥ ७७ ॥

---

* असकृदवलीढमित्यन्वयः साधुः यतः छर्द्यादिषु रोगेषु औषधस्य मुहुर्मुहुः प्रयोगात् । तथा च वाग्भटः—

मुहुर्मुहुर्विषच्छर्दिहिध्मातृट्श्वासकासिषु ॥
योज्यं सभोज्यं भैषज्यं . . . अ० हृ० सू० २४. ४०.

---

1 चूर्णं कृते–ई, क.
2 जातान्–आ, ग.
3 तोषणानां–अ, आ., कोष्टकानां–ग.
4 समांशं–इ.
5 प्रसक्ता इ.
6 एतान्यौष–आ.

[ हरीतक्यादिवटी ]

हरितकीनागरमुस्त[1]चूर्णैः
गुडेन[2] चेत्थं घुटिका [3]विधेया ।
निवारय[4]त्यास्यविधारितेयं
श्वासं प्रवृद्धं प्रबलं च कासम् ॥ ७८ ॥

— तृष्णाचिकित्सा —

[ वटप्ररोहादिचूर्णम् ]

वटप्ररोहं मधु कुष्ठमुत्पलं
सलाजचूर्णं घुटिकां [5]प्रकल्पयेत् ।

---

हरीतकी । नागरम् । शुण्ठी । मुस्ता । एतच्चूर्णं कृत्वा गुडेन बद्ध्वा भक्षयेत् । कासं श्वासं च नाशयति ॥ ७८ ॥

वटप्ररोहाः वटाङ्कुराः । मधु यष्टिमधुकम् । कोष्ठं प्र० । उत्पलं पद्मकन्दः । लाजाश्च । सर्वं चूर्णयित्वा मधुना घुटिकां विधाय वक्त्रे धारिता सा तृष्णां प्रवृद्धां बहुदोषकरां सज्वरां नाशयति ॥ ७९ ॥

---

[1] वर्णैः–इ, चूर्ण–अ, काचु–ग.
[2] तुल्यं गुटिकां विधाय–अ, तुल्यैः घुटिका कृतायाः–ई.
[3] प्रकुर्यात्–ग. [4] त्यात्मविधा–अ.
[5] प्रयक्षात्–अ.

[1]समाक्षिका [2]सा वदने तु धारिता
[3]तृष्णां प्रवृद्धा[4]मपि हन्ति [5]सत्वरम् ॥ ७९ ॥

[ दूर्वारसादियोगः ]

दूर्वारसो दाडिमपुष्पजो वा
घ्राणप्रवृत्तेऽसृजि नस्यमुक्तम् ।
स्तन्येन [6]वालक्तरसेन वापि
विण्माक्षिकाणां [7]च निहन्ति हिक्काम् ॥ ८० ॥

— त्वग्रोगचिकित्सा —

[ धात्रीरसादिकषायः ]

[8]धात्रीरसः सर्जरसः [9]सपाक्यः
सौवीरपिष्टश्च कृतः कषायः ।

---

[10]दूर्वारसो वा स्तन्येन नस्यः। दूर्वारसो वालक्तकरसेन वा नस्यः। दाडिम[11]पुष्पजो वा रसः स्तन्येन नस्यः । दाडिमपुष्पजो वालक्तरसेन वा देयः । नासिकाया[12]मसृजं, प्रवाहप्रवृत्तं रक्तस्रुतिं निहन्ति । दाडिमपुष्पजेन विण्माक्षिकाणां मधुना । [13]नस्ये दत्ते हिक्कां नाशयति ॥

धात्रीरसः आमलकरसः। सर्जरसः राळः, यक्षधूपः। पाक्यं, ऊपरभूमिजलोत्पन्नं त्वधिकलवणं, [14]विडालवणमित्यर्थः। सौवीरपिष्टः

---

1 सुसंहता–इ.
2 सं वदने विधा–आ.
3 तृपं–इ.
4 मसकृन्निहन्ति–ग.
5 सत्वराम्–इ.
6 वा तिक्त–ई, वा लक्ष–ग.
7 विनिहन्ति–आ.
8 धात्रीफलं–ई.
9 सवाक्य–आ.
10 दूर्वारसेन–अ, आ.
11 पुष्पजे वा रसं–आ.
12 मह्नं–अ, आ.
13 नस्येन हिक्कां–आ.
14 [illegible]–आ.

भवन्ति [1]हिध्मानि यथा न भूयः
तथेदमुद्वर्तनकं करोति ॥ ८१ ॥

[ दूर्वाभयादिलेपः ]

दूर्वाभयासैन्धवचक्रमर्द-
[2]कुठेरकाः काञ्जिक[3]तक्रपिष्टाः ।
त्रिभिः प्रलेपैरपि [4]बद्धमूलाः
[5]दद्रूंश्च [6]कंडूश्च [7]विनाशयन्ति ॥ ८२ ॥

---

काञ्जिकपिष्टः । कृतःकषायः । तेनोद्वर्तयेत् यथा न भूयः, पुनः [8]हिध्मानि भवन्ति ॥ ८१ ॥

दूर्वा प्र० । अभया हरीतकी । सैन्धवं प्र० । चक्रमर्द दद्रुघ्नः । *कुठेरकः [तुलसी] एतानि द्रव्याणि काञ्जिकतक्रपिष्टानि त्रिभिः प्रलेपैः सुगमं रक्तमण्डलं दद्रून् कण्डूश्च विसर्पांश्च नाशयन्ति ॥ ८२ ॥

---

* कुठेरकः 'अरण्यविचावंचि' इति 'अ' 'आ' प्रतिपाठौ कां भाषामधिकृत्येति न ज्ञायते । परन्तु कुठेरकस्य 'वर्धरी'ति शब्दकल्पद्रुमे पाठोऽस्ति स तु मराठीभाषायाः स्यात् ॥

---

[1] हिध्मानि–क.
[2] कुटेरकं–आ, कुठेरिकाः–ई.
[3] तत्रविष्टः–अ.
[4] बद्धमूल–ग.
[5] दद्रूश्चआ.–
[6] कण्डूश्च वारयेच्च–अ.
[7] दर्जं च हन्यात्–ई, विनाशयेत्–क.
[8] सिध्मानि–अ.

[ गण्डीरिकादियोगः ]

गण्डीरिकाचित्रक[1]मार्कवार्क
कुष्ठद्रुमत्वग्लवणैः समूत्रैः ।
तैलं पचेन्मण्डलकुष्ठदद्रु-
[2]दुष्टव्रणारूः [3]किटिभापहारि ॥ ८३ ॥

[ सिन्दूरादितैलम् ]

सिन्दूरगुग्गुलुरसाञ्जनसिक्थ[4]तुत्थैः
तुल्यांशकैः कटुकतैलमिदं विपक्वम् ।

---

गण्डीरिका [5]वज्री । चित्रकः प्र० । मार्कवः भृङ्गराजः । अर्क प्र० । कुष्ठद्रुमत्वक् ।[6] कुटजस्थली । समूत्रैः । लवणैः सैन्धवसौवर्चलविडानि । तैलं मूत्रचतुर्गुणेन पाचयेत् । मण्डलदद्रुकुष्ठं रक्तमण्डलदद्रूकुष्ठव्याधिः । विसर्पप्रभृत्यन्यदुष्टव्रणान् नाशयति ॥ ८३ ॥

सिन्दूरं प्र० । गुग्गुलुः प्र० । रसाञ्जनं प्र० । सिक्थकं मधूच्छिष्टम् । तुत्थं धातुविशेषः । तुल्यांशकैः समभागैः । कटु-

---

* विसर्पप्रभृत्यन्यदुष्टव्रणान् हन्तीति व्याख्याता । किन्तु विसर्पकारकप्रधानदोषस्य, अस्मिन् योगे प्रोक्तद्रव्याणां वीर्यस्य च समानत्वे, पुनरपि मूलग्रन्थे विसर्पव्याधीनाम् अनभिधानाच्च, विसर्पप्रभृतिषु व्याधिषु अस्य योगस्योपयोगः कथमिति विचारणीयम् ।

---

[1] मार्तवार्त–अ.
[2] दुष्टव्रणानां व्यथितापहारि–अ.
[3] वधितापहारी–ई, व्यथितापहन्ति–ग.
[4] तुत्थ–अ, तत्थे–आ, क, ग.
[5] निहुडंगः

[1]कण्डूस्रवत्पिटकिकालघुशुष्कखर्जू-
रभ्यञ्जनेन सकृदुद्धरति प्रसह्य ॥ ८४ ॥

[ सौवर्चिकादितैलम्–षड्गुणतक्रतैलम् ]

[2]सौवर्चिकानागरकुष्ठमूर्वा-
लाक्षानिशालोहितयष्टिकाभिः ।
तैलं पचेत् षड्गुणतक्रसिद्ध-
मभ्यञ्जना[3]च्छीतविदाह[4]नुत्स्यात् ॥ ८५ ॥

---

कतैलं, सर्षपतैलम् । पचेत् । कण्डूः खर्जूः । स्रवत्पिटकिका रसिका । लघुतरस्फोटिका । शुष्कखर्जूः । अभ्यञ्जनेन, सकृत् एकवेलया । उद्धरति नाशयति । प्रसह्य शीघ्रम् ॥ ८४ ॥

सौवर्चिका सौवर्चलवणम् । नागरा शुण्ठी । कुण्ठं प्र० । मूर्वा मधुरसा । तदभावे उत्तरवारुणीमूलम् । लाक्षा प्र० । निशा हरिद्रा । लोहिता मञ्जिष्ठा । यष्टिमधुका यष्टिमधुकम् । [5]एतैर्द्रव्यैः तैलं पचेत् । तैलात् षड्गुणं [6]तक्रं प्रक्षिप्य अभ्यञ्जनं सर्वाङ्गे क्रियते । शीतज्वरं नाशयति ॥ ८५ ॥

---

[1] कण्डूस्रवत्पिटककामयवापि हिक्का–अ, ...टककामयवाहिहिक्का–आ. कच्छुंभवत्पिटकिनीमथवापि शुष्का–इ.

[2] सुवर्चिका–इ.

[3] च्सित–अ.

[4] न स्यत्–ग.

[5] एतद्द्रवैः–अ.

[6] तक्र–अ.

[ गुडूच्यादिघृतम् ]

[1]सर्पिर्गुडूचीवृषकण्टकारि-
क्काथेन कल्केन च सिद्धमेतत् ।
पेयं पुराणज्वरकास[2]शूल-
श्वासाग्निमान्द्यग्रहणीगदेषु ॥८६॥

[ वृषादियोगः – घृतम् ]

वृषखदिरपटोलनिम्बपत्रा-
[3]ऽमृतलतिकामलकीकषायकल्कैः ।
घृतमभिनवमेतदाशु [4]पक्वं
जयति [5]विसर्पिविदाहकुष्ठगुल्मान् ॥८७॥

सर्पिः घृतम् । गुडूची प्र० । वृषः आटरूषः । कण्टकारी व्याघ्री । क्वाथेन कल्कं कृत्वा सिद्धमेतत् । सर्पिः प्रक्षिप्य पचेत् । पक्वमेतत्पिबेत् । जीर्णज्वरं कासशूलं ऊर्ध्वश्वासं गुल्मं प्लीहोदरं मन्दाग्निग्रहणीदोषान् नाशयति ॥ ८६ ॥

वृषः आटरुषकः । खदिरः दन्तधावनः । पटोलः प्र० । निम्बपत्राणि [6]अमृतलतिका गुडूची । आमलकी प्र० । एतेषां कषायम् । कल्कं

---

[1] सर्पी—इ.
[2] गुल्म—आ.
[3] त्वगमृतामल—ई. क.
[4] सिद्धे—ई.
[5] विसर्पमदाह—इ, विसर्किकदाह—आ, क, ग.
[6] छर्दि च इत्यधिकः पाठः—अ,

[ अमृतादिघृतयोगः ]

अमृतापटोलपिचुमन्द[1]धावनी-
त्रिफलाकरञ्जवृषकल्कवारिभिः ।
घृतमुत्तमं विधिसुपक्वमाहृतं
[2]प्रपिबेदिदं जयति [3]कुष्ठमातुरः ॥ ८८॥

[ कूश्माण्डलेहः ]

[4]कृत्वा कूष्माण्डखण्डानथ[5]पचनविधिः स्विन्नशुष्काज्यपक्वान्
[6]क्षिप्त्वा भाण्डे सिताढ्ये समरिचमगधा[7]शुण्ठिजाजीसुगन्धैः ।

---

कृत्वा अत्राभिनवघृतं प्रक्षिप्य पक्वं घृतं सिद्धं पिबेत् । आशु शीघ्रम् । जयति । विसर्पिदाहं [8]कुष्ठं गुल्मं वातगुल्मं निहन्ति ॥ ८७ ॥

अमृता प्र० । पटोलः प्र० । पिचुमन्दो निम्बः । धावनी बृहती । त्रिफला प्र० । करञ्जः । वृषः प्र० । कल्कवारिभिः जलेन, द्रव्याणां षोडशगुणजलं द्रव्याणां चतुर्गुणं घृतं कषायं कृत्वा घृतमुत्तमं भवति । तत् पिबेत् । विधिवत्पक्वं गुणकारि भवति । विधिरहितं दोषकारि । अपक्वमौषधं व्याधिजनकं भवति ॥ ८८ ॥

खण्डान् शकलान् । कूष्माण्डकानां । अथ पचनविधिः कर्तव्यः । आदौ स्विन्नं कृत्वा शोषयित्वा पचेत् । तत्प्रतिपाकं दत्वा, मरिचं, पिप्पली,

---

[1] धापनी–ई, धातकी–ग.
[2] प्रपिबन्निदं–इ.
[3] कण्ठमारुतः–ग.
[4] भ्रष्टान् कूष्माण्डकानामथ–इ.
[5] वचन–अ, वपन–ई.
[6] न्यस्येत्खण्डे विपक्वे–इ.
[7] शुद्धजाजीसुगन्धा–इ.
[8] अङ्गे भ्रममित्यधिकः पाठः–अ.

लेहोऽयं बालवृद्धानिलरुधिरकृशस्त्रीप्रसक्तक्षतानां
तृष्णाकासास्रपित्तश्वसनगुदरुज[1]श्छर्दिकानां [2]प्रशस्तः ॥ ८९ ॥

*[ गुदवर्तिः ]

विपाच्य [3]मूत्राम्लमधूनि दन्ति-
पिण्डीतकृष्णा[4]विडधूमकुष्ठैः ।

शुण्ठी, जीरकं एला, त्वक्पत्रकः । एषां पृथक् पलद्वयप्रमाणं गृहीत्वा क्षिपेत् । कूष्माण्डप्रमाणं पलशतम् । घृतेन पाचितं घृतप्रमाणं प्रस्थमेकं पलषोडशम् । तस्मिन् खण्डपक्वशर्करापलशतम् १०० । समरिच-मगधादिभिसुगन्धैस्सह घृतपक्वकूश्माण्डकखण्डं ज्ञात्वा अधिकं च प्रतिपाकं क्षिपेत् । अवलेहोऽयमास्वादनीयः । बालवृद्धानां, अनिलवातगृहीतानां, रुधिरार्दितानां, कृशशरीराणां स्त्रीप्रसक्तक्षतानाम् । तृष्णाकासास्रपित्तान इन्द्रियक्षीणानां दुष्टव्रणपीडितानां, रक्ताधिके ऊर्ध्वश्वासे अर्शोविकारे [5][अयं मान्यः] [6]इति कूश्माण्डावलेहः ॥ ८९ ॥

विपाच्य पाचयित्वा । मत्रं गोमूत्रम् । अम्लं चिञ्चाफलरसः । मधु क्षौद्रम् । दन्ति दन्तिनि ? । पिण्डीतकं मदनफलम् । कृष्णा पिप्पली

* शास्त्रान्तरेऽस्य योगस्य फलवर्तिरिति व्यवहारः । तथा चोक्तम्—
फलप्रधानैः कुम्भाद्यैः मूत्रादिद्रवपेषितैः ।
पिण्डीकृतोऽङ्गुष्ठनिभः फलवर्तिरिति स्मृतः ॥

1 स्छर्दितानां—आ.
2 च शस्तः—इ.
3 मौर्वाम्ल—अ.
4 गरलकुष्ठे—अ.
5 अपानन्ये—अ. अपमान्य—आ.
6 इति कूष्माण्डापलेहः.

[1]वर्तिं कराङ्गुष्ठ[2]निभां घृताक्तां
गुदे [3]रुजानाहहरं विदध्यात् ॥९०॥

— शालाक्यतन्त्रे नस्यम् —

[ कुङ्कुमादिनस्यम् ]

सशर्करं कुङ्कुममाज्य[4]घृष्टं
नस्यं विधेयं[5] पवनासृगुत्थे ।

---

विडं विडालवणं । धूमो गृहधूमः । कुष्ठं प्र० । एभिर्द्रव्यैः वर्तिं कुर्यात् । समस्तं गोमूत्रमध्ये विपाच्य । कराङ्गुष्ठनिभां सदृशां पञ्चाङ्गुलप्रमाणां । घृताक्तां घृतेन उक्षिताम् । अर्शोविकारे आनाहे विबन्धे । गुदे निदध्यात् सञ्चारयेत् । सर्वे दोषा उपशाम्यन्ति ॥९०॥

इति योगशतके कायचिकित्सितम

---

शर्करासहितं कुङ्कुमकेसरं गोघृतेन सद्यः तप्तेन घृष्टं मर्दितम् । एतत् त्रितयं नस्ये कर्तव्यम् । पवनेन वायुना । असृक् शोणितेन च जनिते रोगे । किं भूते भ्रूकर्णादिनाभिवृद्धौ प्रभवे च रोगे, आदित्योदयाद्यावन्मध्याह्नकाल

---

[1] तिं–आ, तीं–इ. [2] समां–क.
[3] रुचानामहितं–अ, रुजानाहहितं–ई.
[4] मृष्टं–इ. [5] पवनास्यमोत्थे–अ, ...गुत्थे–अ.
......नासृगुच्छे–इ, ......नासृगुत्थे–इ.

भ्रूकर्णशङ्खास्थिशिरोर्ध्वशूले
दिनाभिवृद्धौ [1]प्रभवेऽपि [2]रोगे ॥ ९१ ॥

[ षड्बिन्दुघृतम् ]

[3]हिङ्गु [4]विळङ्गं [5]मधुकं सकुष्ठं
सनागरं [6]गोघृतपक्वमेतत् ।
[7]षड्बिन्दुनाम्ना घृतमेतदुक्तं
[8]शिरोगतं रोगशतं [9]निहन्ति ॥ ९२ ॥

---

इति। कुतो व्याधौ। भ्रूदोषे शङ्खदोषे शिरोदोषे शूले अयं नस्यः प्रशस्यते ॥ ९१ ॥

हिङ्गुः प्र० । विळङ्गं प्र० । मधुकं प्र० । यष्टिमधुकं । कुष्ठं प्र० । नागरं शुण्ठी। एतैर्द्रव्यैः गोघृतं पचेत् । नस्यो देयः । शिरः शूलो नासिकाशूलो *अनन्तकशिरःशूलादयो नश्यन्ति । षड्बिन्दु-नामा योगः ॥ ९२ ॥

---

* अनन्तवातलक्षणं चरके—
उपवासातिशोकातिरूक्षशीताल्पभोजनैः ।
दुष्टा दोषास्त्रयो मन्या पश्चा घाटासु वेदनाम् ॥
तीव्रां कुर्वन्ति साक्षिभ्रूशङ्ख एवावतिष्ठते ।
स्पन्दनं गण्डपार्श्वस्य नेत्ररोगं हनुग्रहम् ॥
सोऽनन्तवात......... च. सिद्धि. ९-८४-८६
अयमेव व्याधिः "अन्यतो वात" इति शास्त्रान्तरे ।

---

1 प्रभवे च-अ.
2 रोगी-ई.
3 मृङ्गं-ग.
4 विडङ्गं-क.
5 मधुरं च-ई, मधुकं च-क, ग.
6 गव्यघृतं सुपक्वम्-ग.
7 षड्बिन्दुमातुं नासापुटे न-ग.
8 शिरोरुजे-ग.
9 निहन्यात्-ग.

[ गुडनागरादिनस्यम् ]

नस्यं विदध्याद् गुड[1]नागराभ्यां
[2]ससैन्धवं मागधिकं तथैव ।
घ्राणास्यमन्याहनुबाहुपृष्ठ—
शिरोऽक्षिकण्ठश्रवणामयेषु ॥ ९३ ॥

[पथ्याद्यञ्जनम्]

पथ्याक्षधात्रीफल[3]मध्यबीजै-
[4]स्त्रिद्व्येकभागैर्विदधीत वर्तिम् ।
[5]तयाऽञ्जयेदस्रमतिप्रवृद्धं
[6]अक्ष्णो हरेद्दुष्टमपि प्रकोपम् ॥ ९४ ॥

---

नस्यो देयः । गुडेन सह शुण्ठ्या, सैन्धवेन, सपिप्पल्या । नासिकारोगे हनुरोगे मन्यारोगे बाहुपृष्ठनेत्रशिरःकण्ठकर्णरोगेषु ॥ ९३ ॥

हरीतक्यस्थि बीजं भागत्रयम् । विभीतकास्थि बीजं भागद्वयम् । आमलकास्थि बीजं एको भागः । सर्वमेकत्र कृत्वा वर्तिं विदध्यात् । तयाञ्जनं नयनयोर्दुष्टमतिवृद्धं प्रकोपमपि तिमिरादिदोषं बह्वश्रुपाते [7]बहुव्यथापटलं निहन्ति ॥ ९४ ॥

---

1 नागरेण–आ, ई, क, ग.
2 न सैन्धवं–अ.
3 मद्यबीजैः–अ.
4 द्विकैकभागैः–अ.
5 तयाञ्जनं तत्सपदि–अ, आ, ई, क, ग.
6 ऊष्णो हरेदुष्ट–अ, उग्रोर्जयेत्कष्ट–इ.
7 बहुव्याधापजलं–अ.

[ हरीतक्यादिलेपः-बिडालकः ? ]

हरीतकीसैन्धवताक्ष्यशैलैः
सगैरिकस्वच्छजलप्रपिष्टैः ।
बहिः [1]प्रलेपं नयनस्य कुर्यात्
[2]सर्वाक्षिरोगप्रशमाय नित्यम् ॥ ९५ ॥

[ लोध्रादि-आश्चोतनम् ]

ससैन्धवं लोध्रमथाज्य[3]घृष्टं
सौवीरपिष्टं सितवस्त्रबद्धम् ।
[4]आश्चोतनं तन्नयनस्य कुर्या-
द्दाहं च कण्डूश्च रुजं च हन्यात् ॥ ९६ ॥

हरीतकी प्र० । सैन्धवं प्र० । ताक्ष्यं रसाञ्जनम् । शैलं मनः-शिला । गैरिको रक्तधातुः । एतानि द्रव्याणि [5]निर्मलजले पिष्ट्वा तैर्नयनस्य वहिःप्रलेपः क्रियते । तेन सर्वे नेत्ररोगा नश्यन्ति ॥ ९५ ॥

सैन्धवं । लोध्रं । आज्येन घृतेन पक्वं । सौवीरपिष्टं काञ्जिकपिष्टम् । श्वेतसूक्ष्मवस्त्रे बद्धम् । तेनाऽऽश्चोतनं नयनोपरि निष्पीडनं कुर्यात् । स्रवणं कर्तव्यम् । दाहकण्डू व्यथां च हन्ति ॥ ९६ ॥

---

[1] प्रलेपैरपि वन्धमूल-ग.
दद्रूश्च कण्डूश्च विनाशयन्ति-ग.

[2] सर्वाक्षिरोगोपशमार्थमेतत्-अ.

[3] भृष्टं-ई.

[4] आश्च्योतनं-अ, अश्चोदनं-ई, अश्च्योदनं-क.

[5] निर्वालजलपिष्टानि-अ.

## — अञ्जनयोगाः —

[ अब्धिफेनाञ्जनम् ]

*[1]हन्त्यर्जुनं शर्करयाब्धिफेनो
नक्तान्धतां गोशकृता च कृष्णाम् ।
रसाञ्जनं [2]व्योषयुतं [3]च पिल्लं
[4]तापीसमुत्थं मधुना च शुक्लम् ॥ ९७ ॥

---

समुद्रफेनः । शर्करया सह नयनपूरणे कृते †अर्जुनं रक्तनेत्रच्छर्दिं हन्ति । गोमयरसेन पिप्पलीं संघृष्य अक्षि पूरयेत् । रात्र्यन्धतां हन्ति । त्रिकटुकयुतं रसाञ्जनं पिष्ट्वा पूरितं पिल्लं नेत्रपिचटं हरति । तापी नाम नदी दक्षिणापथे । तस्यां समुत्थितं । किं तत् माक्षिकधातुद्रव्यम् । तन्मधुना सह प्रयुक्तं शुक्लं हन्ति । कृष्णभागे नयनस्य बिन्दुकं वातकफोद्भूतं शुक्लमुच्यते ॥ ९७ ॥

---

* अर्जुनलक्षणं यथा—

नीरुक् श्लक्ष्णोऽर्जुनं बिन्दुः शशलोहितलोहितः ।

अ, हृ. उ, १०-१७.

† रक्तनेत्रं, सिरोत्पातः । तद्यथा—

रक्तराजीततं शुक्लमुच्यते यत्सवेदनम् ।

अशोफाश्रूपदेहं च शिरोत्पातः सशोणितम् ॥ अ. हृ. उ. १०—१४.

---

[1] हन्त्यन्धतां-अ.
[2] योषयुतं-अ, पोषयुतं-ई.
[3] तु-क.
[4] तापीसमुत्थं मधुना च शुक्लम्-ई, तापीसमुत्थं मदनाच्च शुक्लम्-ई, क, ग.

[ पुष्पाद्यञ्जनम् ]

पुष्पाख्यतार्क्ष्यजसितोदधिफेनसर्ज-
सिन्धूत्थगैरिकशिलामरिचैः समांशैः ।
[1]पिष्ट्वा समाक्षिकरसेन [2]तु पूरिताक्षं
[3]हन्त्यन्धतां च तिमिरार्जुन[4]चर्मरोगान् ॥९८॥

[ मुस्ताद्यञ्जनम् ]

मुस्तो[5]शीररजोयवास[6]मरिचं सिन्धूद्भवं[7]कट्फलं
[8]दार्वीतुत्थकशङ्खफेननलदं [9]कालानुसार्यञ्जनम् ।

---

पुष्पाख्यं पुष्पाञ्जनम् । तार्क्ष्यं रसाञ्जनम् । सिता शर्करा । उदधिफेनः समुद्रफेनः । सर्जः [10]रालः । सिन्धुत्थं सैन्धवम् । गैरिका स्वर्णगैरिका । शिला मनःशिला । मरिचम् । एभिर्द्रव्यैः समांशैः समभागैः माक्षिकरसेन ताप्येन सह पिष्टैः सूक्ष्मचूर्णितैस्तु नयनपूरणं कुर्यात् । अन्धता नश्यति । तिमिरं, अर्जुनं श्वेतस्थाने रक्तम् । चर्मरोगं हन्ति ॥ ९८ ॥

मुस्ता प्र० । उशिरं वालकम् । रजो लोहरजः । यवासः । [11][धन्वयासः] मरिचं । सिन्धूद्भवं सैन्धवम् । कट्फलं कायफलम् ? । दार्वी दारुहरिद्रा । तुत्थं प्र० । शङ्खः शङ्खनाभिः । फेनः समुद्रफेनः ।

---

1 पिष्टैस्तु—आ, इ.
2 रसक्रियेयं—इ, तु पूतिताक्षं—ई.
3 हत्यर्मका च—इ.
4 वर्त्म—इ.
5 जररजो—अ.
6 मरिचाः—इ.
7 कच्छलं—अ.
8 दार्वीकंस्थक—अ.
9 कोला—अ.
10 राशः—अ.
11 थामस—अ.

तुल्यं चूर्णितमायसे विनिहितं क्षौद्रान्वितं शस्यते
[1]कण्डूचर्मणि रक्तराजितिमिरे पिल्लोपदेहेषु च ॥९९॥

[ मञ्जिष्ठाद्यञ्जनम् ]

मञ्जिष्ठामधुकोत्पलोदधि[2]कफं त्वक्सेव्यगोरोचना-
मांसीचन्दनशङ्खपत्रगिरि[3]मृत्तालीस[4]पुष्पाञ्जनैः ।
सर्वैरेव समांश[5]काञ्जनमिदं [6]शस्तं सदा चक्षुषो-
[7]दाहक्लेदमलाश्रुशोणितरुजा[8]पिल्लाक्षिशुक्लापहम् ॥

---

नलदं जटामांसी। कालानुसार्यं कृष्णजीरकम्। क्वचिदमुक्तं रक्तचन्दनम् ?। [ केचिद्रक्तचन्दनम् ] अञ्जनं सौवीराञ्जनम्. तदभावे नीलाञ्जनम् । तुल्यं समभागम् । चूर्णितं, आयसे, लोहपात्रे । निहितं क्षिप्तम । क्षौद्रान्वितं मधुना सह, शस्यते । तेन लोचनान्यञ्जयेत् । कण्डूदोषे चर्मणि नयनरोगविशेषे । रक्तराजौ, अक्ष्णोः रक्तरेखादोषे । तिमिरे, पिल्ले पिचटे । उपदेहे च नयनोत्पन्ने चोत्तमम् ॥ ९९ ॥

मञ्जिष्ठा प्र० । मधुका प्र० । उत्पलं नीलोत्पलम्। उदधिकफं समुद्रफेनम् । त्वक् लवङ्गत्वक् । सेव्यं उशीरम । गोरोचनं प्र० । मांसी जटामांसी । चन्दनं रक्तचन्दनम । शङ्खं शङ्खनाभिः । पत्रं तमालपत्रम्। गिरिमृत् स्वर्णगैरिकम्। तालीसपत्रं प्र० । पुष्पाञ्जनं प्र० ।

---

[1] कण्डूचर्मामय—इ.
[2] फलं—इ.
[3] अमृता ता—इ.
[4] पुष्पाञ्जनं—अ.
[5] माञ्जन—इ.
[6] तुल्यं—ई.
[7] कण्डू—इ.
[8] पिल्लम—इ.

[ मुस्तादिकषायः ]

क्वाथः समुस्तातिविषेन्द्रदारु-
कलिङ्गपाठाकटुरोहिणीनाम् ।
गोमूत्रसिद्धो मधुना [1]प्रयुक्तः
[2]श्रेष्ठो गळव्याधिषु [3]सर्वजेषु ॥ १०१ ॥

[ यवाग्रजादिवटिका ]

[4]यवाग्रजं तेजवती [5]च पाठा
रसाञ्जनं [6]दारु निशा सकृष्णा ।

---

तैरेव समांशैरञ्जनमिदं सदा चक्षुषोस्सुगमम् । दाहं क्लेदजलस्रावं मलाश्रुपातं पित्तरक्तदोषं रक्तोत्पन्नव्याधिं च । पिल्लाक्षि पिचटाक्षि, कुत्सितनेत्रदोषं, शुक्लं नेत्रपुष्पं च, अपहन्ति नाशयति ॥ १०० ॥

मुस्ता प्र० । अतिविषा प्र० । इन्द्रदारु देवदारु । कळिङ्ग इन्द्रयवः । पाठा प्र० । कटुरोहिणी कटुका । एतेषां द्रव्याणां गोमूत्रेण क्वाथं कृत्वा मधुयुक्तं पिबेत् । सर्वान् कण्ठरोगान् हन्ति ॥ १०१ ॥

यवाग्रजं यवक्षारः । तेजवती कङ्कुणिका । तदभावे हरिद्रा । पाठा प्र० । रसाञ्जनम् । दारु, देवदारु । निशा हरिद्रा । कृष्णा

---

1 च-युक्तः-ई.
2 पेयो-इ.
3 वर्जयेषु-ई.
4 यवाग्रं-इ.
5 सपाठा-ई.
6 दारु.श - कृष्णाम्-इ.

क्षौद्रेण कुर्याद्[1]घुटिकां मुखेन
तां धारयेत्सर्व[2]गळामयेषु ॥ १०२ ॥

[ दार्व्यादिकषायः ]

दार्वी[3]गुडूची सुमन[4]प्रवाळ-
द्राक्षा[5]यवानीत्रिफलाकषायः ।
क्षौद्रेण [6]युक्तः *कवलग्रहोऽयं
[7]मुखस्य पाकं शमय[8]त्युदीर्णम् ॥ १०३ ॥

---

पिप्पली । क्षौद्रेण, मधुना घुटिकां कुर्यात् । मुखेन [9]सन्धारयेत् । सर्वान् कण्ठरोगान् शमयति ॥ १०२ ॥

दार्वी दारुहरिद्रा । गुडूची प्र० । सुमनप्रवाळाः जातिपल्लवाः । द्राक्षा प्र० । यवानी अजामोदा । त्रिफला प्र० । एतेषां द्रव्याणां क्राथं कृत्वा मधु प्रतिपाकं क्षिपेत् । मुखे गण्डूषाणि [10]कारयेत् । उदीर्णं दीर्घं मुखपाकं शमयति ॥ १०३ ॥

---

* कवलग्रहस्य कालविधिः एवं निरूपितः—

कफपूर्णास्यता यावत्स्रवद्घ्राणाक्षताऽथवा ।
असञ्चार्यो मुखे पूर्णे गण्डूषः कवलोऽन्यथा ॥ अ॰ हृ॰ सू॰ २२--११॰

---

1 द्गुटिकां—इ.
2 गदामयेषु—ई.
3 गुळूची—अ.
4 प्रवाळ—ग.
5 युवासी—ई.
6 युक्तं—आ.
7 मुखव्यपाकं—अ.
8 त्यवीर्णम्—ग.
9 सन्धार्य—अ.
10 धारयेत्—आ.

[ कुष्ठादिचूर्णम् ]

कुष्ठं दार्वी लोध्र[1]मब्दं [2]समङ्गा
[3]पाठा तिक्ता [4]तर्जनी पीतिका च ।
चूर्णं शस्तं घर्षणं तद्द्विजानां
रक्तस्रावं हन्ति कण्डूरुजं च ॥ १०४ ॥

[ सौवीरादितैलम् ]

सौवीर[5]शुष्कार्द्रक[6]मातुलुङ्गैः
[7]माखरसैर्गुग्गुलसैन्धवैश्च ।
[8]पक्वं च तैलं कटुके निषिक्तं
तत्कर्णयोः कर्णरुजोपशान्त्यै ॥ १०५ ॥

---

कुष्ठं प्र० । [9]दार्वी दारुहरिद्रा । लोध्रं प्र० । अब्दं मुस्ता । समङ्गा प्र० । पाठा प्र० ।[9] तिक्ता कटुकी । तर्जनी ज्योतिष्मती । पीतिका हरिद्रा । एतेषां द्रव्याणां चूर्णं, तेन दन्तानां घर्षणम् । दन्तमूले रक्तस्रावं कण्डूव्यथां च नाशयति ॥ १०४ ॥

सौविरङ्गोधूमकाञ्जिकम् । शुष्कार्द्रकं शुण्ठी । मातुलुङ्गकं बीजपूरम् । [10]माखरसाः । गुग्गुलं प्र० । सैन्धवं प्र० । एतैर्द्रव्यैः क्वाथेन

---

[1] मब्धं—अ.
[2] समष्टं—इ, समङ्गा-ग.
[3] पाठातिक्ते—ग.
[4] तेजिनी—इ, तेजनी—क.
[5] सूक्तार्द्रक—इ.
[6] मातुलुङ्ग—इ, मातुलङ्ग—ग.
[7] मांसैः—इ.
[8] पक्वाथ तैलं कटुकं निषिञ्चेत्—इ,
[9] 'अ' प्रतौ पाठो नास्ति ।
[10] माखरसैरिति मातृकयोः ।

[ वासादिघृतम् ]

[1]वासानिम्बपटोलपर्पटफल[2]श्रीचव्यदार्व्यम्बुदैः
तिक्तोशीरदुरालभात्रिकटुका[3]त्रायन्तिकाचन्दनैः ।
सर्पिः सिद्धं[4]मथोर्ध्वजन्तुविकृति[5]घ्राणाक्षिशूलादिषु
त्वग्दोषे [6]ज्वरविद्रधौ व्रणरुजा[7]ऽशुक्लेषु चैवेष्यते ॥१०६॥

---

च तैलं पचेत् । [8]कटुतुम्बके निक्षिप्य तेन कर्णं पूरयेत् कर्णव्यथोपशमनार्थम् । सर्वान् कर्णरोगान् नाशयति ॥१०५॥

वासा आटरूषकः । निम्बः प्र० । पटोलः प्र० । फलं त्रिफला । केचिन्मदनफलं । श्रीः बिल्वम् । चव्यं चविका । दारु दारुहरिद्रा । अम्बुदो मुस्ता । दुरालभा प्र० । त्रिकटुकं प्र० । त्रायन्तिका त्रायन्ती त्रायमाणा । चन्दनं रक्तचन्दनम् । एभिर्द्रव्यैः पक्वं घृतं पूर्ववत् । ऊर्ध्वजन्तुविकाराः । घ्राणाक्षिशूलादिषु, आदिशब्दात्कर्णशूलशङ्खशूलशिरःशूलादयो गृह्यन्ते । त्वग्दोषे कुष्ठे । विद्रधौ व्याधौ ज्वरविद्रधिके, कुष्ठव्रणे, मुखजनितव्रणे । रुग्व्यथायां । अशुक्ले शुक्लघ्नौ । एतेषु रोगेषु इदमेव हितम् ॥१०६॥

---

1 वासा—अ.
2 श्रीमुस्तदार्व्यम्बुभिः—इ,
3 त्रायान्तिका चन्दकैः—अ.
4 मथोर्ध्वं—आ, क.
5 घ्राणार्तिशूलापहं—ई.
6 ज्वरवि्धौ—अ.
7 शुक्लेषु—अ, आ.
8 कटुकम्बक इति 'अ'... तुम्बरे इति 'आ'

[ दार्व्यादिघृतम् ]

दार्वी[1] पर्पटनिम्बवत्सककणादुःस्पर्शयष्टीवृषा-
त्रायन्तीत्रिफला[2]स्तथा च कटुका भूनिम्बरक्ताम्बुदाः ।
[3]एभिः कल्ककषायसाधितमिदं सर्पिः प्रशस्तं दृशः
[4]पित्तासृक्प्रभवेषु [5]सर्वतिमिरेषूर्ध्वेषु च व्याधिषु ॥१०७॥

[ षड्बिन्दुकतैलम् ]

शुक्लैरण्ड[6]जटा[7]विळङ्गमधुकैः जीवन्तिकोग्रत्वचा-
[8]रास्नानागरसैन्धवैस्सतगरैः शतपुष्पिकाकल्कितैः ।

दार्वी दारुहरिद्रा । पर्पटकं प्र० । निम्बः प्र० । वत्सकः इन्द्रयवः । कणा पिप्पली । दुःस्पर्शः दुरालभः । यष्टी यष्टिमधुकम् । वृषः आटरूषकः । त्रायन्ती त्रायमाणा । त्रिफला प्र० । कटुका कटुकरोहिणी । भूनिम्बः किराततिक्तकः । रक्ता मञ्जिष्ठा । अम्बुदा मुस्ता । एतेषां द्रव्याणां कल्केन सिद्धं घृतमिदं, दृशः प्रशस्तदर्शनबलकरम् । पित्तोद्भवेषु सर्वतिमिरेषु, चोर्ध्वेषु च व्याधिषु । [9]कण्ठादूर्ध्वमुत्पन्नव्याधिषु च । प्रशस्तमुत्तमम् ॥ १०७ ॥

शुक्लैरण्डजटा, शुक्लैरण्डमूलम् । विळङ्गं प्र० । मधुकं प्र० । जीवन्तिका प्र० । उग्रा वचा । त्वचा त्वक् । रास्ना प्र० । नागरा

---

1 पिपट—अ.
2 पटोलकटुका—ई.
3 एषां—इ.
4 पितास्तभूतवेष्टसर्वतिमिरक्षुद्रेषु च—ग.
5 भूत्कृतिमिरे—ई
6 जडा—आ,
7 मधूकतिलकं—ई.
8 रास्ना—अ, रास्मा—आ, ई.
9 कण्ठादुत्पन्न—अ.

संयुक्तैः पयसा [1]समार्कवरसैः तैलं हितं पाचितं
नासालोचनमस्तकोर्ध्वगतिषु प्रोक्तं [2]हि षड्बिन्दुकम्[3] ॥

— शल्यतन्त्रम् —

[ क्षारविधिः ]

क्वाथे मुष्ककभस्मनोऽनलशिखादग्धं [4]क्षिपेच्छङ्खकं
[5]तत्तैनैव पुनर्जलेन [6]विपचेत् क्षारं [7]स तैले विधिः ।

---

शुण्ठी । सैन्धवं प्र० । तगरं गन्ध[8]द्रव्यविशेषः । शतपुष्पा प्र० । एभिर्द्रव्यैः कृतचूर्णैः, गोदुग्धेन वा अजादुग्धेन, मार्कवरसेन सह समस्तद्रव्यैः तिलानां तैलं पचेत् । नस्ये षड्बिन्दुकं पूरयेत् । नासाक्षिशिरोरोगे, ऊर्ध्वरोगे, कण्ठान्मस्तकपर्यन्तं रोगं प्रवृद्धमपि एतत्तैलं हन्ति ॥ १०८ ॥

॥ इति शालाक्यचिकित्सा ॥

क्वाथे, कथंभूते ? मुष्ककाष्ठं दग्ध्वा भस्म क्रियते । तद्भस्म जलमध्ये प्रक्षिप्य पचति । पक्वं वस्त्रेण परिच्युतं गृह्यते स क्वाथः । तस्मि-

---

[1] समाक्षिरसै—अ. [2] च—ग.

[3] अस्य पद्यस्य स्थाने 'इ' मातृकायां श्लोकः एवं पठ्यते ।

शुक्लैरण्डमूलमथोग्रां शतपुष्पा-
पुष्पोद्भूतं यच्च बृहत्यास्तग[illegible]
तैलं सिद्धं तैः सपयस्कैस्तिमिर[illegible]
नस्यं श्रेष्ठं व्याधिषु [illegible] परेषु ॥

[4] [illegible]—अ. [5] तत्तैलेन—इ.

[6] विधिवत्—अ. [7] सुतैलं—आ, सुतैले—ई.

[8] [illegible]द्रव्यविशेषम्—आ.

[1]योज्यं तद्व्रणदुष्टकव्रणरुजां [2]सर्वासु नाडीषु च
त्वग्दोषेषु भगन्दरेषु [3]विधिवत्कण्डवामये च स्थिरे ॥ १०९॥

[ निशादि (रोपण) तैलम् ]

[4]निशा सयष्टी मधुपद्मकोत्पलैः[5]
प्रियङ्गु[6]कासावर[7]लोध्रचन्दनैः ।

---

न्नित्यं पचेत् । क्वाथे किं क्रियते । अनलशिखादग्ध क्षिपेच्छंङ्खकं शंखनाभेः अग्निना दग्धं क्षारं सञ्जातं प्रक्षिपेत् । तत्रै.व पुनर्जलेन विपचेत् क्षारम् । तत्क्षारं तेन मुष्कक[8]भस्मोद्धृतेन क्वाथेन पुनरपि पचेत् । स तैले विधिः, क्षारे यो विधिर्निर्दिष्टः तैले स विधिः। तत्तैलमेषु प्रयोज्यम् । व्रणदुष्टकव्रणरुजां, यथासंयुक्तम् कुतः । व्रणेषु, अर्शोविकारेषु । नाडीषु, क्लेदोपलक्षितचिरप्रवृत्तेषु नाडीव्रणेषु । भगन्दरत्वग्दोषे । [9]वातादिसन्निपातोत्पन्नपूयपरिस्रवादिशंबूकावर्ते । अग्निव्रण[10]पञ्चप्रकाराः । तेषु योज्यम् । *कण्डूरोगे ; स्थिरप्ररूढे इत्यर्थः ॥ १०९॥

निशा हरिद्रा । यष्टिमधुका प्र० । पद्मकं प्र० । उत्पलं पद्मकन्दः । प्रियङ्गुः प्र० । कासा कासमर्दकः । वरं सैन्धवलवणम् ।

---

[1] युञ्ज्याद् तद्व्रणदुष्टिषु,—ब ........व्रणदुष्टके—ई.
[2] स्पर्शस्सु—इ.
[3] विविधे कण्ठामये च—इ.
[4] निशासु—ग.
[5] श्व इत्यधिकः पाठः—ग.
[6] काशावर—प.
[7] रौध्र—आ,
[8] भस्मोद्भूतेन—अ.
[9] वातपित्तश्लेष्मसंनिपातादतोत्पन्ने—अ.
[10] पञ्चप्रदराणि—अ.

[1]विपाच्य तैलं पयसा [2]विमिश्रितं
क्षतेषु [3]संरोहणदाह[4]नाशनम् ॥ ११० ॥

[ जात्यादिघृतम् ]

जातीनिम्बपटोलपत्रकटुकादार्वीनिशा[5]शारिवा-
मञ्जिष्ठाभयसिक्थतुत्थमधुकैर्नक्ताह्वबीजै[6]स्तथा ।
[7]सर्पिः [8]सिद्धमनेन सूक्ष्मवदना [9]मर्माश्रिताः स्राविणो
गम्भीरास्सरुजो व्रणा[10]स्सगतिकाः शुध्यन्ति रोहन्ति च ॥

---

लोध्रं प्र० । चन्दनं रक्तचन्दनम् । एभिर्द्रव्यैस्समभागेन कल्केन दुग्धेन सह तैलं विपाच्यते । तत्तैलमाह क्षतेषु योज्यम् । क्षतानां च [11]प्ररोहं [12]दाहं नाशयति ॥ ११० ॥

जातीनिम्बपटोलानां [13]त्वचः गृह्यन्ते । कटुका । दार्वी दारुहरिद्रा । शारिवा काश्यपी । मञ्जिष्ठा प्र० । अभया हरीतकी । सिक्थं मधूच्छिष्टम् । तुत्थं प्र० । [14]मधुकं प्र० । नक्ताह्वबीजं करञ्जबीजम् । एतैर्द्रव्यैः क्राथं कृत्वा । तत्तु दधिदुग्धकाञ्जिकसहितं कृत्वा तन्मध्ये गोघृतं प्रक्षिप्य

---

[1] विपच्य—प.
[2] विमिश्रं—आ, ग' प्रयोजयेत—इ, प.
[3] संरोपण—प.
[4] नाशम्—आ, ग.
[5] शारिभ—आ,
[6] समैः—प, सरिवा—इ.
[7] सर्वैः—अ.
[8] साध्यम—इ.
[9] मर्माश्रितोस्राविणा—अ, मर्माक्षितो—आ, मर्माश्रिते—ई.
[10] स्सगदिकाः—अ.
[11] वरोहं—अ.
[12] वातं—आ.
[13] त्वचानि—आ.
[14] यष्टिमधुक—आ.

[ दशाङ्गलेपः ]

शिरीष[1]यष्ट्यागरु[2]चन्दनैला-
मांसीहरिद्राद्वयकुष्ठ[3]वालैः ।
लेपो दशाङ्गः सघृतः [4]प्रदिष्टो
विसर्पिकुष्ठज्वरशोफहारी ॥ ११२ ॥*

पचेत् । एवमनेन सिद्धेन घृतेन माक्षिकेन सह । सूक्ष्मवदनाः [5]अज्ञातमुखाः । [6]मर्माश्रिता मर्मसन्धिस्थिताः । स्राविणो रक्तपूयस्रावाः । गम्भीरा अभ्यन्तरपाकाः । सरुजः सव्यथाः सगतिकाः समन्तनाडिगताः । व्रणाः, शुद्ध्यन्ति रोहन्ति च ॥ १११ ॥

शिरीषं प्र० । यष्टिः यष्टिमधुकम् । अगरु कृष्णागरु । चन्दनं रक्तचन्दनम् । एला प्र० । मासी जटामांसी । कुष्ठं च । वालः वालुकम् । †एभिः द्रव्यैः (कृतः कषायः ? ।) जलपिष्टैः घृतेन सह लेपः क्रियते ।† अनेन विसर्पिविस्फोटकाः कुष्ठज्वराः शोफाः अर्शश्च नश्यन्ति । दशाङ्गोऽयं लेपः ॥ ११२ ॥

---

* 'प' पुस्तके नास्तीदं पद्यम् ।

† 'एतैः द्रव्यैः....लेपः क्रियते' इति व्याख्यातृवचनेन अत्र कषायशब्दस्य पञ्चकषायकल्पनारूपेषु मध्ये अन्यतमस्य कल्कस्य रूपान्तरितं शिलापिष्टं शुष्कद्रव्यकृतं चूर्णं गृह्यते । न तु क्वाथरूपः कषायः । तस्य जलेन घृतेन वा सह लेपः अशक्यः ।

---

1 यक्ष्या—आ.
2 धूमचन्द्रनैला (अधिकः पाठः)—अः
3 हालैः—अ.
4 प्रदिष्टो—अ.
5 अजातमुखाः—आ.
6 मर्मांक्षिताः—आ.

[ अमृतादिलेपः ]

अमृतविषपटोलं [1]मुस्तकं [2]सप्तपर्णं
खदिरमसितवेतं निम्बपत्रं हरिद्रे ।
[3]विविध[4]विषविपाकान् शोफविस्फोटकण्ड्
रपहरति [5]मसूरीश्शीतपित्तज्वरं च ॥ ११३ ॥*

[ सौगन्धिकालेपः ]

†[6]प्रपौण्डरीकोत्पलगैरिकाणां
मञ्जिष्ठयष्टीमधुकं [7]चिहारि ? ।
द्विचन्दनं मुस्तमुशीरपत्रं
सौगन्धिकाख्यं कुमुदं च तुल्यम् ।

‡एतेषां लेपेन विविधविषाणि त्रिसर्पाः शोफा विस्फोटकाः कण्डूश्च मसूरिकाः शीतपित्तज्वरादयो नश्यन्ति ॥११३॥ एतत्सुगमम् ॥ ११४-११५ ॥

* 'प' पुस्तके श्लोकोऽयं नास्ति ।

† 'इ ई' मातृकयोः एतदारभ्य 'व्रणनाशकृत्' इत्यन्तं पद्यबृन्दं न दृश्यते । 'प' पुस्तकेऽपि नास्ति ।

‡ एतद्व्याख्यास्थाने 'आ' मातृकायां स्पष्टोऽर्थ इति लिखितमस्ति ।

[1] वुस्तकं—ग.
[2] सप्तवर्णं—अ.
[3] द्विविध—ग.
[4] विषविहर्ता—आ, विषार्दाशाभविस्फोट—ई. विषविषादान्—क,
[5] मसूरश्शीत—ई, क, मसूरिः—आ.
[6] प्रपौण्डरी—ग.
[7] विहारम्—आ.

लेपः प्रदिष्टः पयसा सुपिष्टः
कुमारिकाणां [1]च विसर्पिकाणाम् ॥ ११४ ॥

[ पञ्चवल्कललेपः ]

न्यग्रोधोदुम्बराश्वत्थ[2]प्लक्षवेतसवल्कलैः ।
त्वक्पीवरे च मञ्जिष्ठाचन्दनोशीरगैरिकाः ॥ ११५ ॥
[3]श्लक्ष्णपिष्टैर्यथालाभं शिशूनां च प्रलेपयेत् ।
[4]सहसा रागविस्फोटवेदनाव्रणनाशकृत् ॥ ११६ ॥

[5]। इति शल्यतन्त्रम् ।

— विषचिकित्सा —

[ शिरीषपुष्पाञ्जनम् ]

शिरीषपुष्पस्वरसेन भावितं
[6]त्रिस्सप्तकृत्वो मरिचं [7]सिताह्वम् ।

---

शिरीषपुष्पाणां स्वरसः आत्मीयरसः, तेन भावितमेकविंशतिवारम्। किं तावत्। मरिचं प्र०। सिताह्वं शिग्रुबीजानि। अञ्जनपाननस्ये

---

[1] कुविसर्पि . .–आ. कुमिसर्पिसाष्ठः–आ.

[2] प्लक्षोवेतन–अ, प्लक्षवेतसपल्लवैः–आ.

[3] श्लक्ष्णपिष्टैच–अ, प्लक्षपिष्टे–आ. [4] सदादराग–क, सहाहरांग–ग.

[5] शल्यतन्त्रकतचिकित्सा–आ. [6] सहस्रकृत्वो–इ, प.

[7] सिताह्वयम्–इ, प. शाताह्वम्–ग.

प्रयोजयेदञ्जनपान[1]नस्यै
विमोहितानामपि सर्पदंशिनाम् ॥ ११७ ॥

[ मयूरपित्तयोगः ]

* मयूरपित्तेन च [2]तण्डुलीयकं
काकाण्डयुक्तं प्रपिबेदनल्पम् ।
[3]विषाण्यसौ स्थावरजङ्गमानां
सोपद्रवाण्यप्य[4]चिरेण हन्ति ॥ ११८ ॥

[ तैलपललादियोगः ]

तैलं तिलानां पललं [5]गुडं च
[6]क्षारं [7]तथा [8]चार्करसेन पीतम् ।

वा प्रयोजयेत् । विमोहितानां सर्पदष्टानाम् । ते स्वस्था भवन्ति ।[9] केचिन्मतेन मरिचं पृथक्, शिताह्वं श्वतशिग्रबीजानि पृथक् ॥ ११७ ॥

मयूरपित्तं प्र० । तण्डुलीयकमूलं प्र० । काकाण्डकं [10]काक-तुम्बीफलम् । एतत्त्रयं प्रचुरं पिबेत् । स्थावरजङ्गमानां विषाणि उपद्रव-सहितानि, हन्ति नाशयति ॥ ११८ ॥

तिलानां तैलम् । पललं तिलचूर्णम् । गुडं प्र० । †अलक्तं लाक्षारसम् । एतदौषधानां समूहं अर्करसेन सह पिबेत् । हालाहलमपि

* 'ई' प्रतौ श्लोकोऽयं न दृश्यते ।

† मूले 'अलक्त' पदं नास्ति । क्षारपदस्य स्थाने निवेशयितव्यं भवेत् ।

[1] मान्ये—अ, नावनैः—इ, प. नस्यं—ग. [2] तण्डुलीय्यकं—अ.
[3] विषाणिसंस्थावरजङ्गमानि—इ, प., विषाण्यसं . . . . ग.
[4] तिरे महन्ति—ग. [5] गुडश्च—इ. [6] क्षीरं -अ. प.
[7] तथार्कं सममेव—इ, प. [8] लक्तरसेन,—आ, ई. वार्करसेन—ग.
[9] केनाचित्—आ. [10] काकतुण्ड—अ.

अलर्कमुग्रं विषमाशु हन्ति
सद्योद्भवं वायुरिवाभ्रवृन्दम् ॥ ११९ ॥*

[ अगारधूमयोगः ]

[1]अगारधूमो [2]महिषाक्षियुक्तः
सवाजिगन्धोऽ[3]न्वितताण्डुलीयः ।
गोमूत्र[4]पिष्टैर्ह्यगदो निहन्ति
विषाणि [5]सस्थावरजङ्गमानि ॥ १२० ॥

उग्रं, दारुणं विषं हन्ति। तात्कालिकोद्भवं मेघं मेघसमूहं वायुरिव हन्ति ॥११९ ॥

अगारधूमो गृहधूमः। महिषाक्षि [6]गुग्गुलः। वाजिगन्धा अश्वगन्धा। तण्डुलीयकमूलम्। गोमूत्रेण पिष्टः अगदः। उपपानेन स्थावरजङ्गमविषाणि विनाशयति ॥ १२० ॥

* विषदुष्टस्य लक्षणं सुश्रुते यथा—

श्वशृगालतरक्ष्वृक्षव्याघ्रादीनां यदानिलः ।
श्लेष्मप्रदुष्टो मुष्णाति संज्ञां संज्ञावहाश्रितः ॥
तदा प्रस्रस्तलाङ्गूलहनुस्कन्धोऽतिलालवान् ।
अत्यर्थबधिरोऽन्धश्च सोऽन्योन्यमभिधावति ॥

(अनुवर्तते)

[1] अङ्गारधूमो—आ, ग.
[2] महिषाक्ष—इ.
[3] क्रमितण्डुलीयः—आ.
[4] पिष्टोत्थ—आ, पिष्टोद्य—ई.
[5] संस्थावर—आ, प.
[6] गुग्गुलुः—आ.

[ मधूकसारादियोगः ]

* मधूकसारं मधुना [1]सुपिष्टं
हिङ्गुं च दद्यात्सह [2]कुङ्कुमेन ।
सशोणिते नस्यमृते च दद्या-
दुत्तिष्ठते वासुकिनापि दष्टः ॥ १२१ ॥

[ उदुम्बरादियोगः ]

[†] उदुम्बरं पक्व[3]करीपमुग्रं
सकोमलं तार्क्ष्यरसेन पिष्टम् ।

---

मधूकसारं मधूकफलाभ्यन्तरं बीजास्थि। मधुना घृष्टं हिङ्गुकुङ्कुमाभ्यां सहितं नस्ये देयम्। विषातिशयान्नासिकायां रक्तप्रवाहे। अमृते सजीवे सति। वासुकिनापि दष्टोऽपि जीवति ॥ १२१ ॥

उदुम्बरं। [4]पक्वकरीरं प्र०। उग्रं वचा। कोमलं शिरीषपुष्पम्।

---

तेनोन्मत्तेन दष्टस्य दंष्ट्रिणा सविषेण तु ।
सुप्तता जायते दंशे कृष्णं चाति स्रवत्यसृक् ।
दिग्धविद्धस्य लिङ्गेन प्रायशश्चोपलक्षितः ॥
सु. सं. कल्पस्थानं ६–४०–४३ ॥

* 'इ' मातृकायां 'प' पुस्तके च श्लोकोऽयं नास्ति ।

* 'इ ई' मातृकयोः 'प' पुस्तके च एतत्पद्यं नास्ति ।

---

[1] सपिष्टं–ग.
[2] नागरेण–ग.
[3] करीर–अ.
[4] पक्वकरीरं–अ.

बस्ताङ्गतोयं [1]कथितं पृथिव्यां
भुजङ्गदष्टोग्रविषाणि हन्ति ॥ १२२ ॥

[ अलाबुबीजयोगः ]

*अलाबुबीजं कटुकं सबीजं
तस्यैव तोयैः बहुशो [2]निषिक्तम् ।
आलेपनाद्यैर्विधिवत्प्रयुक्तं
हन्याद्विषं तार्क्ष्यकमाशु चोग्रम् ॥ १२३ ॥

---

तार्क्ष्यं रसाञ्जनम् । बस्ताङ्गतोयेन अजामूत्रेण पीतं विसर्पिविषाणि नाशयति ॥ १२२ ॥

अलाबु कटुतुम्बिबीजम् । तस्याः पक्वबीजानि चूर्णितानि [3]अन्यतुम्बिक्वाथेन बहुशो भावितानि । लेपननस्यपानादिभिः दत्तं तार्क्ष्यकं महाविषं नाशयति ॥ १२३ ॥

---

* 'इ ई' मातृकयोः 'प' पुस्तके च पद्यमिदं न दृश्यते ।

---

1 'कथितं प्रथितः' इति पाठाधिक्यं 'ग' मातृकायाम् ।

2 Sनिषिक्तम्—आ०   3 अन्यतुवक—अ०

[ चन्द्रोदयवर्तिप्रयोगः ]

*मांसीसेव्यालकौन्तीजलजलजशिलारोचनापद्मकेशी-
[1]स्पृक्काचण्डाहरिद्रागदसित[2]फलिनीसृग्लतापद्मकैलाः ।
[3]तुल्यं, [4]गौराष्टभागाश्चतुरिभकुसुमावर्तयः [5]सर्वयोग्याः
[6]कृत्याऽलक्ष्मीपिशाचज्वर[7]विषमविषं घ्नन्ति चन्द्रोदयाख्याः ॥

---

मांसी जटामांसी । सेव्यं वालुकम् । आलं हरितालम् । कौन्ती हरेणुका । जलं द्वितीयनालकम् । जलदा मुस्ता । शिला मनश्शिला । रोचना गोरोचना । पद्मकं उत्पलम् । केशी भूतकेशी सैव [8]निर्गुण्डी । स्पृक्का गन्धद्रव्यविशेषः । चण्डा रालः । हरिद्रा प्र० । गदः कुष्ठम् । सिता शर्करा । फलिनी प्रियङ्गुः । असृक् कुङ्कुमम् । लता मञ्जिष्ठा । पद्मकं प्र० । एला सूक्ष्मैला । एतदौषधसमूहं तुल्यं समभागं, मांस्यादिसूक्ष्मैलापर्यन्तम् । गौराष्टभागाः श्वेतसर्षपाष्टभागाः । वर्तयः घुटिका । सर्वयोग्या इति, सर्वेषु नस्याञ्जनपानलेपनादियोग्याः । कृत्याः शाकिन्यादिग्रहान्तम् । अलक्ष्मीः । पिशाचज्वराः । विषमविषं, स्थावरजङ्गममित्यादिकम् । घ्नन्ति । अयं प्रयोगश्चन्द्रोदयाख्यो नाम ॥ १२४ ॥

— इति विषचिकित्सा —

---

* 'ई' मातृकायां श्लोकोऽयं नास्ति ।

[1] स्पृक्का–अ स्पृक्का–आ
[2] फलिनासृग्लवा–अ फलिता–आ,इ,क । पमिता–प. पद्मकीला:–प.
[3] तुल्या–इ.
[4] गौरष्ट–प.
[5] सर्वरोगाः–अ, सर्वभोग्याः–प.
[6] कृत्वा–प.
[7] विषम गदान् सेति चन्द्रोदयाख्यान्–इ ; विषजगदा ...... दयाख्यः–प.
[8] निर्गुन्धा–अ.

— भूतचिकित्सा —

[ धूपनयोगः ]

*कार्पासास्थिमयूर[1]पिच्छबृहतीनिर्माल्य[2]पिण्डीतकं
[3]त्वग्वंशीवृकदंश[4]विट्तुषवचाकेशाहि[5]निर्मोचनैः ।
नागेन्द्रद्विज[6]शृङ्गहिङ्गुमरिचै[7]स्तुल्यैस्तु धूपः कृतः
स्कन्दोन्मादपिशाचराक्षससुरावेश[8]ज्वरघ्नः स्मृतः ॥ १२५ ॥

---

कार्पासास्थि कार्पासबीजम् । मयूरपिच्छं प्र० । बृहती दोर्विफलम् । निर्माल्यं शिवनिर्माल्यम् ? । पिण्डीतकं मदनफलम् । त्वग्वंशी वंशत्वक् । वृकदंशविट् मार्जालविष्ठा । वचा प्र० । केशाः मनुष्यकेशाः । तुषं यवतुषम् । अहिमोचनं सर्पकञ्चुकम् । नागेन्द्रद्विजो गजदन्तः । शृङ्गं गोविषाणम् । हिङ्गु प्र० । मरिचं प्र० । तुल्यैः सर्वद्रव्यसमभागैः, धूपः क्रियते । स्कन्दो ग्रहः । उन्मादोऽपस्मारः । †पिशाचग्रहः, राक्षसग्रहः, पिशाचराक्षसदेवग्रहाः । एतेषामावेशात् ज्वराः [9]'विषमैकाहिकद्व्याहिकत्र्याहिकचातुर्थिकाः' । इत्येवमादिकं नाशयति ॥ १२५ ॥

---

* 'ई' मातृकायां श्लोकोऽयं नास्ति ।

† ग्रहाऽविष्टलक्षणं अष्टाङ्गहृदये यथा ....

लक्षयेत् ज्ञानविज्ञानवाक्चेष्टाबलपौरुषम् ।
पुरुषेऽपौरुषं यत्र तत्र भूतग्रहं वदेत् ॥ अ. हृ. उ. ४. २

---

1 पत्र—इ, प.
2 पिण्डीतुकं—ग.
3 त्वक्मांसीवृष—इ.
4 विट्तुष—अ, पिट्टुष—क.
5 निर्मोचनैः—अ, ?.अ
6 भृङ्ग—ई.
7 तुल्यैः कृतं धूपन—इ, प.
8 ज्वरघ्नं परम्—इ, प.
9 एकाहिकादिज्वराः—आ.

[ सिद्धार्थादियोगः ]

सिद्धार्थत्रिफलाशिरीष[1]कटभीश्वेताकरञ्जामरैः
मञ्जिष्ठा रजनीद्वयं त्रिकटुकं श्यामावचाहिङ्गुभिः ।
शस्तं छागलमूत्रपिष्टमगदं [2]सर्वग्रहोच्चाटनं
[3]कृत्योन्मादविषज्वरप्रशमनं [4]पानादिभिर्योजितम् ॥१२६॥

[ भूतराजघृतयोगः ]

त्रिकटुक[5]दलकुङ्कुमग्रंथिकक्षारसिंही-
निशा[6]काष्ठसिद्धार्थ[7]युग्माम्बुशक्राह्वयैः ।

---

सिद्धार्थाः रक्तसर्षपाः । त्रिफला प्र० । शिरीषः प्र० । कटभी किणिही ? । श्वेतः श्वेतसर्षपः । करञ्जः प्र० । अमरो देवदारु । मञ्जिष्ठा प्र० । रजनीद्वयं हरिद्रे द्वे । त्रिकटुकं प्र० । श्यामा पिप्पली ? । एतानि द्रव्याणि अजामूत्रे पिष्टानि । पानादिभि र्योजितं सत् एतदगदं सर्वग्रहोच्चाटनं, सर्वग्रहानामुच्चाटनं करोति । कृत्योन्मादविषज्वरं नाशयति ॥ १२६ ॥

त्रिकटुकं प्र० । दलं पत्रकम् । कुङ्कुमं केसरम् । ग्रंथिकं पिप्पलीमूलम् । क्षारो यवक्षारः । सिंही बृहती । निशा हरिद्रा । का...

---

[1] कटिभी—आ, कटभि—क.
[2] सर्वं ...... त्सादनं—आः सर्पं ...... च्चाटनं—प.
[3] कृत्योन्मादपिशाचराक्षसहरं पानादिभिः सेवितम्—प.
[4] पानादिभिर्भोजन—अ. [5] दनल—ई, क.
[6] दारु—ई, कुष्ठ—प. [7] [illegible]

सितलशुन*मुनिफल[1]त्रिकोशीरतिक्तावचा
तुत्थयष्टीवला[2]लोहिताख्याशिलापद्मकैः ।
दधितगरमधुकसारं प्रियाह्वा[3]निशाख्याविषा
तार्क्ष्य[4]शैलैः सचव्याऽऽमयैः [4]कल्ककैः ।
घृतमभिनवमभिषेप[5]मूत्रैस्तु सिद्धं [6]स्मृतं
[7]भूतरावाह्वयं [8]तत्पाननस्यं ग्रहघ्नं परम्[9] ॥१२७॥†

---

देवदारु । सिद्धार्थयुग्मं सितासितसर्षपाः । अम्बु वालुकम् । शक्राह्वं कुटजस्थली । सिता शर्करा । लशुनं प्र० । मुनिः प्र० ? । फलत्रिकं त्रिफला । उशीरं वालुकम् । तिक्ता कटुका । वचा प्र० । तुत्थं धातुविशेषः । यष्टीमधुकम् । वला चिक्कणा ? लोहिताख्या मञ्जिष्ठा । शिला मनश्शिला । पद्मकं प्र० । दधि कपित्थम् । तगरं प्र० ।

---

* 'मुनि' प. पुस्तके नास्ति ।

† 'इ' मातृकायां प. पुस्तके च उत्तरत्र अन्यत् पद्यं दृश्यते—

नतमधुककरञ्जलाक्षापटोलीसमंगावचापाटलाहिङ्गुसिद्धार्थसिंहीनिशायुक्लता रोहिणी, मदनकटुकफलत्रिकाकांचदारुक्रिमिघ्नाजगन्धाभयाकोलकोशातशिग्रुत्रिम्बाम्बुदेन्द्राह्वयैः । गदशुकतरुगुञ्जाश्रीजयष्ट्यद्रिकर्णीनिकुम्भाग्निचित्रैः समैः कल्कितैः मूत्रवर्गेण सिद्धं घृतं । त्रिविधविनिहितसाशु सर्वैः क्रमैर्योजितं हन्ति सर्वग्रहोन्मादकुष्ठज्वरस्तन्महाभूतरावे स्मृतम् ॥

---

1 त्रिकौकितिक्ता—ई. त्रिकोशितिक्ता—क.
2 लोहितैलाशिला—इ.
3 विषाख्या-इ.
4 कल्कितैः—आ, क,
5 मार्त्रैस्तु—अ, मूत्राम्बु—प.
6 मतं—इ.
7 भूतरावारथ्यं—अ.
8 तत्पाने नस्यं नासिकायां—अ. तत्पानस्तत्—इ.
9 मूतराहस्यम्—ग.

## — कौमारतन्त्रम् —

### [ दार्व्यादिकषायः ]

दार्वी हरिद्रा कुटजस्य वीजं
[1]शृङ्गी [2]च यष्टीमधुकं च तुल्यम् ।
क्वाथः शिशोः स्तन्यकृते च दोषे
[3]सर्वातिसारेषु च [4]नित्यमिष्टम् ॥ १२८ ॥

---

मधुकसारं प्र० । प्रियाह्वा प्रियङ्गुः । निशाख्या दारुहरिद्रा । विषा अतिविषा । तार्क्ष्यशैलं रसाञ्जनम् । चव्यं चविका । आमयं कुष्ठम् । एभिः कल्कितैः घृतमभिनवशोषं प्रत्यग्रम् । मूत्रैस्तु सिद्धं गोमहिष्यजोष्ट्रेभनरस्त्रीमूत्रक्षेपेण सिद्धं पक्वम् । अनेन घृतपानेन नस्येन च सर्वे ग्रहा नश्यन्ति । भूतरावं नाम घृतं स्मृतम् ॥ १२७ ॥

। इति भूततन्त्रम् ।

दार्वी दारुहरिद्रा । हरिद्रा प्र० । कुटजस्य वीजं इन्द्रयवः । शृङ्गी कर्काटकशृङ्गी । यष्टिमधुकम् । एतत्सर्वं समं क्वाथं कुर्यात् । शिशोर्बालकस्य, स्तन्यकृते, च दोषे सर्वातिसारेषु च वातपित्तश्लेष्मसन्निपातसम्भवेतेषु सर्वकालेषु उत्तमम् ॥ १२८ ॥

---

[1] सिंही च यष्टी—इ.
[2] च यष्टीमधुका—प.
[3] [illegible]—इ.
[4] [illegible]—प.

[बिल्वादिकषायः]

बिल्वं [1]सुपुष्पाणि च धातकीनां
जलं सलोध्रं [2]गजपिप्पली च ।
[3]क्काथावलेहौ मधुना [4]प्रशस्तौ
बालेषु [5]योज्यावतिसारितेषु ॥ १२९ ॥

[ शृङ्ग्यादियोगः ]

[6]शृङ्गीं सकृष्णातिविषां विचूर्ण्य
लेह्यं विदध्यान्मधुना शिशूनाम् ।

---

बिल्वं बिल्वफलम् । धातकीपुष्पाणि । जलं वालकम् । लोध्रं प्र० । गजपिप्पली प्र० । एतेषां कषायोऽवलेहो वा । मधुना प्रयुक्तो बालेषु योज्यः अतिसारितेषु ॥ १२९ ॥

शृङ्गी कर्काटकशृङ्गी । कृष्णा पिप्पली । अतिविषा प्र० । एतत्त्रयं चूर्णं कृत्वा मधुनावलेहं कृत्वा । शिशूनां बालानाम् । कथं-

---

[1] सपुष्पाणि–अ., च पु ... –प.

[2] गज ... लीनाम्–अ, आ. ई. क, ग.

[3] क्काथा ... हो–अ, आ, ई, क. कथापथेना–ग.

[4] विमिश्रौ–इ, प. प्रशस्तां–ग. [5] योज्योऽप्य ... –आ.

[6] शृङ्गां–प.

[1]कासज्वरच्छर्दिभिरर्दितानां
समाक्षिकां [2]वातिविषामथैकाम् ॥ १३० ॥

॥ इति कौमारतन्त्रम् ॥

— *रसायनवाजीकरणम् —

[ धात्रीयोगः ]

धात्रीचूर्णस्य कंसं [3]स्वरसपरिगतं क्षौद्रसर्पिःसमांशं
[4]कृष्णा[5]मानी[6]सिताष्ट[7]प्रसृतिसमयुतं [8]स्थापितं [9]धान्यराशौ ।

---

भूतानां? कासज्वरच्छर्दिभिरार्दितानां पीडितानां बालानाम् । अथवा एकां अतिविषां मधुना दद्यात् एषां शिशूनाम् ॥ १३० ॥

धात्रीचूर्णस्य कंसं । कंसं नाम कंसमानम् तौल्यप्रमाण विशेषः । तद्यथा —गुञ्जाषड्भिर्माषः । चतुर्माषैः शाणं भवति । स च टंक

---

* रसायनं वाजीकरणं च पृथक् पृथक् तन्त्रम् । तथापि तत्र सामान्यक्रियाया अपि सत्वात् सहप्रयोगो युज्यते । तथा चोक्तं चरकेण—

स्वस्थस्योर्जस्करं यत्तु तद्वृष्यं तद्रसायनम् । च० चि० १-५

---

1 तापज्वर–अ, आ, क.

2 चातिविषां–इ, प. वान्तिविषां–क. वातविषां–ग.

3 स्वरसि परिगतं–अ,

4 कृष्णा–ई.

5 मानि–क.

6 शिताष्ट–इ. सितष्ट–ई.

7 प्रसृत–प.

8 धान्यराशौ निधाय–ग.

9 भस्मराशौ–प.

वर्षान्ते [1]तत्समश्नन् भवति विपलितो रूपवर्णप्रभावो
निर्व्याधिर्बुद्धिमेधास्मृतिवचनबलस्थैर्यसत्त्वैरुपेतः ॥ १३१ ॥

---

उच्यते। चतुःशाणैः कर्षः। चतुःकर्षैः पलम्। चतुःपलैः कुडवम्। चतुर्भिः कुडवैः प्रस्थः। चतुःप्रस्थैः आढकः। चतुर्भिराढकैः कंसः। एतद्द्विधिकंसप्रमाणं धात्रीचूर्णं संगृह्यते*। खरसपरिगतं तच्चूर्णं आमलकरसेन सप्तवारान् भावितम्। क्षौद्रसर्पिःसमांशं मधु घृतमपि समानम्। मधुपलानि ६४। घृतपलानि ६४। अनयोराढकद्वयं जातम्। तत्समं धात्रीचूर्णं आढकद्वयं इत्यर्थः। एवमाढकचतुष्टयम्। तच्च कंसप्रमाणं धात्रीचूर्णेन सह जातम् कृष्णामानी। कृष्णा पिप्पली। तासां मानी अष्टौ पलानि। सिताष्टप्रसृतिः। सिता शर्करा तस्य षोडश पलानि। एतत्समस्तं आमलकादिचूर्णेन सह प्रक्षिप्य। स्थापितं धान्यराशौ सुगमम्। वर्षान्ते वर्षाकालस्य चातुर्मास्यश्रावणादिकार्तिकपर्यन्तं स्थाप्य वर्षान्ते समुद्धार्य, जितेन्द्रियो भूत्वा प्रातर्भक्षणीयम्। भक्षकः कीदृशो भवति ?। वलीपलितवर्जितः रूपवर्ण [प्रभा] वान् भवति। निर्व्याधिर्भवति। बुद्धिः स्वकार्यविचारणा। मेधा शास्त्रधारणशक्तिः। स्मृतिः सर्वकार्यस्मरणम्। वचनं भाषितम्। बलं पराक्रमः। स्थैर्यं दृढत्वम्। सतो भावस्सत्त्वम्। एभिरुपेतः प्रयुक्तः, पुरुषो भवति ॥ १३१ ॥

---

* एवमत्र प्रमाणयोजनम्।

६ गुञ्जाः—माषः
६ माषाः—शाणः/टङ्कः
४ शाणाः—कर्षः
४ कर्षाः—पलम्
४ पलानि—कुडवम्
४ कुडवानि—प्रस्थः
४ प्रस्थाः—आढकः
४ आढकाः—कंसः

---

[1] तत्समस्तं—अ, आ, ई, क, ग.

[ यष्टीरसायनम् ]

यष्टीतुगासैन्धवपिप्पलीभिः
सशर्कराभिस्त्रिफला [1]प्रयुक्ता ।
आयुः [2]प्रजा [3]ऋध्यति मानमेधा
[4]भवेद् [*]ज्वरव्याधि[5]विनाशनं च ॥ १३२ ॥

[ श्वदंष्ट्रादिचूर्णम् ]

चूर्णं [6]श्वदंष्ट्रा[7]मलकाऽ[8]मृतानां
[9]लेह्यं [10]सर्पि[11]स्सितभागयुक्तम् ।

---

यष्टी, मधुकम् । तुगा [12]तवक्षीरम् । सैन्धवं प्र० । पिप्पली प्र० । त्रिफला प्र० । एतानि समभागानि । सर्वप्रमाणेन शर्करां प्रक्षिप्य ततो भक्षयेत् । आयुः प्रजा मानमेधा ऋध्यति । *ज्वरव्याधिं विनाशयति ॥ १३२ ॥

श्वदंष्ट्रा गोक्षुरः । आमलकः प्र० । [अमृता] गुडूची प्र० । एतत्त्रयं समभागशर्करं प्रक्षिप्य भक्षयेत् । यो भक्षयति सः इन्द्रिय-

---

* जराव्याधिरित्येव स्यात् । यतोऽयं वाजीकरणप्रयोगः ।

1 समेता–ग. 2 प्रदा–आ, प.

3 वृष्यतमातिमेध्या–इ, प. 4 भवेज्जरा–प.

5 विनाशनी–इ, प. विनन्दनं–ई, क.

6 स्वदंष्ट्रा–ई. 7 मलके–ग.

8 व्रतानां–ई. 9 लिहन्–इ, लि तू–प.

10 विसर्पिंसितभाग–ग. 11 मधुपा च–इ, मधुभाग–प.

12 तवक्षीरी–आ.

[1]वृष्यः स्थिरः [2]शान्तविकारदुःखः
[3]समाश्शतं जीवति कृष्णकेशः ॥ १३३ ॥

[ मधुकप्रयोगः ]

मधुकं मधुना घृतेन च
प्रलिहन् क्षीरमनु[4]प्रयोजयेत् ।
लभते[5]ऽपि च नात्मनः क्षयं
प्रमदानां [6]प्रियतां च गच्छति ॥ १३४ ॥*

---

[7]वृद्धिकरो, दृढाङ्गः, शान्तविकारः, वातपित्तश्लेष्मविकारजित्, दुःखरहितः वलीपलितवर्जितः ॥ १३३ ॥

मधुकं यष्टिमधुकं, मधुसंयुक्तं अवलिहन् क्षीरमनुपानं प्रजयोयेत्। जीर्णान्ते क्षीरेण भोजनं कुर्यात्। एवं कुर्वन् आत्मक्षयं नाप्नोति। स्त्रीणां प्रियत्वं गच्छति ॥ १३४ ॥

। इति रसायनवाजीकरणचिकित्सा ।

---

* 'ग' मातृकायां· एतच्छ्लोकानन्तरं पुरतो दृश्यमानौ इमौ अधिकौ श्लोकौ वर्तेते ।

बीजं गोक्षुरकर्कव्यश्चूर्णकृत्यं सशर्करम् ।
निपीय पयसा रात्रै नरस्य दुर्जयेरपि ॥
विदारिकन्दचूर्णं तु क्षीराज्येन प्रविलधनु ।
रमयेत स्त्रीशतं नित्यं प्रत्याहारलमाप्नुयात् ॥

---

1 गृह्यः–ई.
2 शान्ति–इ.
3 भवे शतं–ग.
4 प्रवेशयेत्–ई.
5 परमानो हित–अ, न च रेतसः क्षय–आ, परमात्मसोदय–क, न च धातुसंक्षयं–प.
6 च मतं च गच्छति–प.
7 वृद्धिः करोति–अ.

6

— पञ्चकर्मविधिः —

इदानीं वमनविरेचनप्रस्थापनानुवासन [नस्य] क्रिया उच्यन्ते।

[ यष्ट्यादिकषायः ]

[1]यष्टीकषायं [2]लवणोग्रयुक्तं
कलिङ्गकृष्णाफलकल्क[3]मिश्रम् ।
[4]सक्षौद्रमेतद्वमनं [5]प्रयोज्यं
कण्ठामयास्यश्रवणामयेषु ॥ १३५ ॥

---

यष्टीमधुकषायम् । लवणं प्र० । उग्रा वचा । कलिङ्गं कुटजानि । कृष्णा पिप्पली । फलं मदनफलम् । एतेषां कल्केन तं क्वाथं मिश्रं कृत्वा मधुना सहालोड्य पिबेत् । घटिकाद्वयं स्थित्वा एरण्डनालं तालुप्रमाणं क्षिपेत् । वमनं प्रयोज्यं कण्ठामयश्रवणामयेषु आस्यामयेषु च । आमशब्दः प्रत्येकं संबध्यते[6] ॥ १३५ ॥

। इति वमनक्रिया ।[7]

---

[1] यष्टीकषायो–इ.
[2] लवणाग्र–अ.
[3] मिश्रः–इ.
[4] न क्षौद्रयुक्तं–अ, ... द्रवने–प.
[5] प्रशस्तं–इ.
[6] कण्ठामयेषु अस्यकर्णरोगेषु प्रसिद्धम्–अ.
[7] इति विरेचनचिकित्सा–ग.

[ हरीतक्यादिकषायः ]

हरीतकीभिः [1]क्वथिते समाने
[2]दन्त्यग्निकृष्णाबिडचूर्णयुक्तम् ।
विरेचनं सोरुबुतैल[3]मिश्रं
निरत्ययं [4]योज्यमथामयघ्नम् ॥ १३६ ॥

[ रास्नादियोगः ]

[5]रास्नाराठफलत्रयामृतलतायुक्पञ्च[6]मूलीबला-
[7]माषक्वाथयुतं सतैल[8]लवणं क्षौद्रं ससर्पि[9]र्गुडैः ।

दन्ती मूलम् । अग्निः चित्रकः । हरीतकीभिः सह समाने क्वथिते कषाये । पिप्पलीबिडालवणचूर्णं प्रक्षिप्य एरण्डतैलेन सह पिबेत् । पूर्ववत् पाचनम् । स्नेहं पिबेत् । विरेचनं भवेत् । निरत्ययं निर्विघ्नम् । वातपित्तश्लेष्मसंनिपातमित्यर्थः ॥ १३६ ॥

॥ इति विरेचनमुक्तम् ॥

रास्ना उत्तरपथोद्भूतद्रव्यम् । राठं मदनफलम् । फलत्रयं त्रिफला । अमृतलता गुडूची । *पञ्चमूली उच्यते : 'बृहती

*व्याख्यातृप्रतिपादितपञ्चमूलं आर्षग्रन्थेषु प्रतिपादितपञ्चमूलेभ्यो भिन्नमेव ।

1 क्वथितं सुवीरं–ई, प.
2 दन्त्यर्ध–इ, दन्त्यग्नि–प.
3 मेतत्–प.
4 योज्य निरा–अ, आ.
5 रास्माराढ–अ, रस्मा...–आ, ...राट–इ, ग., ...रार–ई.
6 मूलीदलबला–ग.
7 मांसक्वाथ–प, मांसक्वाथकृतः–इ.
8 लवणक्षौद्रः–इ.
9 गुडः–इ.

पुष्पाह्वाघनविल्वकुष्ठफलिनीकृष्णावचा[1]कल्कितो
वस्तिः काञ्जिकदुग्ध[2]मूत्रसहितो वातामयेभ्यो हितः ॥ १३७ ॥

[ बलातैलम् ]

तैलं बला[3]क्वथितकल्क[4]सुगन्धि[5]गर्भं
[6]सिद्धं पयोदधितुषोदकमस्तु[7]तक्रैः ।

---

पिप्पलीमूलं चव्यञ्चित्रकमेव च । अग्निमन्थासमायुक्तं पञ्चमूलं प्रकीर्तितम् । बला चिक्कणा । माषक्वाथः, माषाणां क्वाथः । तिलतैलम् । लवणं सैन्धवं लवणम् । क्षौद्रं मधु । सर्पिः घृतम् । गुडः इक्षुविकारः । पुष्पं शतपुष्पा । घनं मुस्ता । विल्वं श्रीफलम् । कुष्ठं प्र० । कृष्णा पिप्पली । वचा प्र० । एतेषां कल्कं काञ्जिकदुग्धे गोमूत्रसहितं पचेत् । एतत्तैलविधिः । वाते, तैलावशेषं कृत्वा तत्पक्वतैलं कोष्णवति भस्त्यां प्रक्षिप्य शनैर्मुच्यते । स वर्तिरपानद्वारे स्थाप्यते यावदष्टोत्तरशतमङ्गुळिकास्फोटकालम् । तदा शनैर्वस्तिमपाहरेत् । ततो मलप्रवृत्तिर्भवति । उदरस्थादिवातविकारान् शमयति ॥ १३७ ॥

। इति प्रस्थापनम् ।

किम् । बलातैलं भवति । बला चिक्कणा । (केचित्) कटुतुम्बिकायाः क्वाथः कल्कः । गोक्षीरम् । दधि । तुषोदकं यवधान्य-

---

[1] कल्कितै–अ.
[2] मुग्ध–इ.
[3] क्वथन–इ.
[4] सुगन्ध–ई.
[5] वरत–इ.
[6] गर्भं–इ.
[7] चुक्रैः–इ.

[1]तद्वत्कुरण्टकसरण्यमृतावरीभिः
प्रत्येक[2]सिद्ध[3]मनुवासनमीरणघ्नम्* ॥ १३८ ॥

[ गुडनागरादिनस्यम् ]

†[4]नस्यं विदध्याद् गुड[4]नागराभ्यां
[5]ससैन्धवं [6]मागधिकं तथैव ।

काञ्जिकम् । मस्तु दध्युदकम् । गोतक्रम् । एतत्तैलं पक्वं कृत्वा । सुगन्धिगर्भं, त्रिसुगन्धम् । त्रिजातकादि वस्तूनि सूक्ष्माणि कृत्वा तत्तैले प्रक्षिपेत् । पूर्वार्धेन परिसमाप्तं एतद्बलादितैलमुच्यते । अथ द्वितीयं तद्वत्तत्सदृशम् । सहाचरः कोरण्टः । सरणी प्रसारिणी । अमृता गुडूची । वरी शतावरी । एतेषां क्वाथकल्केन [7]क्षीरादितक्रावसानाभ्यन्तरेण च तैलम् । पृथक् सिद्धं पक्वं कृत्वा लोहपात्रे संस्थाप्य एलाकंकोलजातिफल-कृष्णागरुमुस्तादि, त्वक्पत्रकादि सुगन्धिद्रव्यं संचूर्ण्य तत्तैले प्रक्षिपेत् । अनेनैव तैलाभ्यङ्गे कृते वातो नश्यति । सहचरादितैलं द्वितीयं अनुवासन-कृते श्रेष्ठम् ॥ १३८ ॥

। इति [8]अनुवासनम् ।

गुडेन, शुण्ठ्या [च] नस्यं जलसंयुक्तं प्रयोजयेत् , अथवा सैन्धव-

* ईरणो वायुः ।
† 'ई' मातृकायां एष श्लोको न दृश्यते ।

[1] तद्वत्सहाचरसण्य–अ, आ, [2] पक्व–इ.
[3] मनुवासवविरारणघ्न–अ, मनुवातसमीरणघ्न–आ.
[4] नागरं वा–आ, इ, क, ग, प.
[5] संसैन्धवा–इ, ...वां–प. [6] मागधिकामयो वा–इ, प.
[7] क्षादितत्रावसाभ्यन्तरेण–अ. [8] अनुवासनक्रिया–अ.

घ्राणास्य*मन्याहनुबाहु[1]पृष्ठ-
शिरोऽक्षिकण्ठश्रवणामयेषु ॥ १२९ ॥

†[2]इत्येवं विधिविहिताः प्रसिद्धयोगाः
सिद्ध्यर्थं विनिगदिता भिषग्वराणाम् ।

पिप्पलीभ्यां सह, जले घृष्टं नस्यं दद्यात् । अयमेको योगः । नासारोगे हनुबाहुपृष्ठशिरोऽक्षिकण्ठश्रवणमुखरोगेषु, एतेषूत्पन्नव्याधिषु नस्यो देयः ॥

। इति नस्यविधिः ।

— पञ्चकर्माणि समाप्तानि —

‡ग्रन्थादौ सर्वाचार्यप्रतिज्ञा रूढा यथा योगशतकं करोति इति तत्कृतमिति हेतोः [3]दृष्टस्वात्मानं प्रकाशयतीति वैद्यानाम् । तद्यथा —इत्येवमनेन प्रकरेण । विहिताः अनेन कृताः प्रसिद्धयोगाः । सिद्ध्यर्थं मनुष्याणां

* मन्या—ग्रीवायाः पश्चात् शिरा

† श्लोकोऽयं केवलं 'इ' प्रतौ 'ग' प्रतौ च दृश्यते ।

‡ 'अ· आ' मातृकयोः एतत्पूर्वमयं पाठः दृश्यते । यथा—'इत्येवं विधिविहिताः प्रसिद्धप्रयोगसिद्ध्यर्थं निगदिताः भिषग्वरेण दृष्टैतान् कथमपि चिकित्सकोऽपि कुर्यादित्यर्थः पुनरपि वक्ष्यते तत्र किञ्चित् ।' एतत्तु अस्य श्लोकस्यैव विकृतं रूपं लिपिकारकृतं स्यात् । मातृकयोस्त्वयं पाठः टीकावल्लिखितोऽस्ति ।

[1] पृष्ठः—इ·

[2] यित्येवं विधिहिताः प्रसिद्धाप्रयोगसिद्ध्यर्थं निगदिताम् ।
भिषग्वरेण दृष्टयेतां कथमपि चिकित्सकोऽपि कुर्यादित्यर्थः ॥—ग·



[3] दृष्टः—अ·

[1]दृष्ट्वैतान् [2]कथमचिकित्सकोऽपि युञ्ज्या-
दित्यर्थः पुनरपि वक्ष्यतेऽत्र किञ्चित् ॥ १४० ॥

[वायुकोपकारणम्]

*संधारणा[3]त्यशन[4]जागरणोच्चभाष्य-
व्यायामयानकटुतिक्तकषायरूक्षैः ।

---

व्याधिविनाशनार्थं निगदिताः । [5]अस्माभिश्च ज्ञापिताः कथिता इत्यर्थः । एषां भिषग्वराणाम् । ज्ञापितान् एतान् योगान् दृष्ट्वा अवैद्योऽपि यदि व्याधिं ज्ञातुं शक्नोति । अचिकित्सकोऽपि[5] अवैद्यः [अपि] क्रियाः यदा एवं सम्प्रदायीकुर्यादित्यर्थः । कथं करोति चिकित्सामपि । [इति] हेतोः पुनरपि वक्ष्यतेऽत्र किञ्चित् ।

वातपित्तश्लेष्मोत्पत्तिः कथं भवति मनुष्याणाम् ? । तज्ज्ञात्वा अवैद्योऽपि वैद्यो भवति, इति प्रतिज्ञां करोति । पुनरपि अत्र किञ्चिदनेन पदेन स्वल्पं वक्ष्यति ॥ १४० ॥

संधारणं नाम मूत्रपुरीषहिक्कादीनाम् । अत्यन्नं मात्राधिकभोजनम् । जागरणं रात्रौ निद्राक्षतिः । उच्चभाष्यं बृहच्छब्देन बहुजल्पनम् । कोला-

---

* असंधारणीयाः वेगाः अष्टाङ्गहृदये यथा—

वेगान्न धारयेद्वातविण्मूत्रक्षवतृट्क्षुधाम् ।
निद्राकासश्रमश्वासजृम्भाऽश्रुच्छर्दिरेतसाम् ॥ अ. हृ. सू. ४-१

संधारणीयाः वेगाः यथा—

---

[1] दृष्ट्वा तान् कथमचिकित्सकोऽपि—प.
[2] कथमपि चि—इ.
[3] नशन—इ.
[4] जागरश्चभाषा—ग, जाग...भाष्यैः—अ. ... भाषा—प.
[5] आ प्रतौ भागोऽयं न दृश्यते ।

चिन्ता[1]व्यवायभयलङ्घनशोकशीतैः
[2]वायुः प्रकोपमुपयाति [3]घनागमे च ॥ १४१ ॥

[ पित्तकोपकारणम् ]

[4]कट्वम्लमद्यलवणोष्णविदाह[5]तीक्ष्णैः
[6]क्रोधातपानलसुखश्रम[7]शुष्कशाकैः ।

---

हलभाषणम् । व्यायामो भारोद्वहनं, कुठारेण पाटनं, वायुनिरुद्धकरणं इत्यादि । यानं गमनक्रिया । यच्च हस्त्यश्वाद्यारोहणम् । कटुतिक्तकषाय-रूक्षैः, मूत्र्यलप्रभृतिभिः कटुतिक्तनिम्बादिभिः कषायैः, विभीतकादिभिः रूक्षैः, निःस्नेहभोजनैः । चिन्ता एकाग्रचित्तेन[8]गृहद्वंद्वादिसाधनम् । व्यवायो मैथुनम् । भयं राजादिभयम् । लङ्घनमतिचङ्क्रमणम् । शोकः *श्वान-प्रकारादिकमुत्पन्नः ? । इष्टजनमरणैः दुःखम् । शीतं [9][हिमम्] । शीतल [10]वस्तुसेवनम् । एतैः वायुः प्रकोपं याति । घनागमे श्रावणभाद्रपद-मासयोः । पुरुषस्येत्यर्थः ॥ १४१ ॥

कटुकैः कटुकद्रव्यैः । अम्लैः पक्वचिञ्चादिभिः, अनशनादिसेवनैः

---

धारयेत्तु सदा वेगान् हितैषी प्रेत्य चेह च ।
लोभेर्ष्याद्वेषमात्सर्यरागादीनां जितेन्द्रियः ॥ अ. हृ. सू. ४.२५.

* स्वानप्रकारादिका इति स्यात् ।

---

1 व्यवामतपल–ग. 2 वायुश्च को–इ.
3 घनामये–क. 4 खट्वम्ल–ग.
5 तृष्णा–ई, क., तीव्र–ग, तीक्ष्ण–अ, आ, इ.
6 क्रोधनलातप परिश्रम–प, .... ... भयश्रम–इ.
7 शुक्त्व–इ, शुष्कमांसैः–ग. 8 ग्रह–आ.
9 ...–अ, आ. 10 वस्त्र–आ.

[1]क्षारैरजीर्णविषमा[2]सन[3]भोजनैश्च
[4]पित्तं प्रकोपमुपयाति [5]घनात्यये च ॥ १४२ ॥*

मद्यपानेन लवणादिकवस्तुना उष्णाशनादिना विदाहतीक्ष्णैः राजिकासर्षपादिभिः। क्रोधः प्राणिकोपः। आतपः सूर्यप्रभा। अनलसुखं अग्निसेवनम् श्रमो यन्त्रादिः परिश्रमो धातुव्यापारः, तेन शरीरवैकल्यम्। शुष्कशाकैः सुशोषितशाकैः क्षारैः क्षाराधिकपर्पटादिशाकपत्रैः। अजीर्णं भुक्तोत्तरमलविकारः। [6] विषमासनमस्थानोपवेशनम्। विषमभोजनं असम्प्राप्तकालभोजनम्। एतैः सर्वैः पित्तं प्रकोपमुपयाति। घनात्यये, घनानामत्ययो विनाशः, तस्मिन् काले आश्वयुजकार्तिकयोः पित्तोद्रेकः ॥ १४२ ॥

---

* अजीर्णविषमभोजनं अष्टाङ्गहृदये—

मिश्रं पथ्यमपथ्यं च भुक्तं समशनं स्मृतम्।
विद्यादध्यशनं भूयो भुक्तस्योपरि भोजनम्।
अकाले बहु चाल्पं वा भुक्तं तु विषमाशनम्॥ अ.हृ.सू. ८. ३३–३४

तथा च—

न चातिमात्रमेवान्नमामदोषाय केवलम्।
द्विष्टविष्टम्भिदग्धामगुरुरूक्षहिमाशुचि अ.हृ सू.८. ३२.

---

[1] क्षाराद्यजीर्ण–ग, प.
[2] शन–आ, इ. प.
[3] सेवनैश्च–प.
[4] पैत्यं–ग.
[5] घन...न–अ.
विषमाशन–आ.

[श्लेष्मकोपकारणम्]

[1]स्वप्नाद्दिवा मधुरशीतलमत्स्य[2]मांसैः
गुर्वम्लपिच्छिलतिलेक्षु[3]पयोविकारैः
स्निग्धातितृप्तिलवणोदकपान[4]भक्षैः
श्लेष्मा प्रकोपमुपयाति तथा वसन्ते ॥ १४३ ॥

[नानारोगकारणम्]

*[5]त एवमेते क्रमशो [6]द्विशो वा
दोषाः [7]प्रदुष्टा युगपत्त्रयो वा ।

---

स्वप्नाद्दिवा । मधुरं माक्षिकशालियवगोधूमादयः । शीतलं खण्डादिकम् । मांसवर्गः । गुरुद्रव्याहारः । अम्लं जम्बीरादिकम् । पिच्छिलं पक्वफलादिकम् । तिलेक्षुपयोविकारैः, इक्षुविकारैं, रसफाणितशर्करागुड-खण्डादिभिः, पयोविकारैः पायसादिभिः । स्निग्धं माषान्नादिकम् । अतितृप्तिः लोलुपभोजनम् । लवणोदकपानैः, वृष्यकारकादिभक्ष्यैः । दिवाशयनादिभिः सर्वैः श्लेष्मा प्रकोपमुपयाति । वसन्ते चैत्रवैशाखयोः ॥

एते दोषाः वातपित्तश्लेष्माणः । एवमिति अत्यन्तम् । रोगैः प्रकोप हेतुभिः प्रदुष्टा भवन्ति । क्रमश एकैकश इत्यर्थः । केनचिद्विकारेण

---

* 'ई. क. ग' मातृकासु श्लोकोऽयं नास्ति ।

---

1 स्वप्ने–इ, ग, प.
2 मांसं–इ.
3 चयो–ई,
4 भक्ष्य–क.
5 तत एवमेते–अ, ई येवमेते–प.
6 विदध्यात्–अ, आ.
7 प्रवृद्धा–प.

कुर्वन्ति रोगान् विविधान् शरीरे
[1]संख्यातसंख्या[2]तिगताननेकान् ॥ १४४ ॥

[वायुविकारचिह्नानि]

पारुष्यसङ्कोचनतोदशूल-
[3]श्यामत्वमङ्गव्यथ[4]चेष्टभङ्गाः ।
[5]सुप्तत्वशीतत्वखरत्व[6]शोफाः
कर्माणि वायोः प्रवदन्ति तज्ज्ञाः ॥ १४५ ॥*

युगपत् त्रयो वा वातापित्तश्लेष्माणः प्रदुष्टा जाताः सन्ततं रोगान् विविधान् [असंख्येयान् कुर्वन्ति] ॥ १४४ ॥

पारुष्यं रूक्षता । सङ्कोचो ज्ञातः । तोदः व्यथनम् । शूलो ज्ञातः । श्यामत्वं श्यामलता । अङ्गव्यथनं सुगमम् । चेष्टाभङ्गः गमनादिमहाभङ्गः । सुप्तत्वं अङ्गे निःस्पर्शत्वम् । खरत्वं निष्ठुरता । शोफः प्र० । वायुविकारस्यैतानि चिह्नानि ॥ १४५ ॥

* 'इ क' मातृकयोः एष श्लोकोऽत्र नास्ति ।
'ग' मातृकायां अनेन श्लोकेन साकं ग्रन्थस्समापितो वर्तते ।
श्लोकोऽयं प्रथममेव (सं ३.) मातृकासु दृष्टः । परन्तु तत्र विवरणं नास्तीति पुनः सविवरणं मातृकासु सन्दर्भे गृहीतोऽस्ति । अत एव अत्र पुनः परिगणितोऽस्माभिः ।

1 संख्यानसंज्ञा–इ.
2 विगतान्–प.
3 पारुष्यसङ्गव्यथ…भङ्गा-इ, श्यामत्व…भङ्गचेष्टान्–प. श्यामत्वमङ्गस्वमथापीडा-ग, स्तम्भत्व–इ.
4 वेष्टु–आ.
6 शोषान्–प.

[पित्तविकारचिह्नानि]

*[1]परिश्रमस्वेदविदाह[2]रोगान्
[3]वैगन्धसंक्लेदविपाक[4]कोपान् ।
प्रलापमूर्च्छाभ्रम[5]पीतभावान्
पित्तस्य कर्माणि वदन्ति तज्ज्ञाः ॥ १४६ ॥

[कफविकारचिह्नानि]

†[6]श्वेतत्वशीतत्वगुरुत्वकण्डूः
स्नेहोपदेहस्तिमितत्व[7]लेपान् ।

परिश्रमः अङ्गस्य शिथिलता । स्वेदः अङ्गार्द्रभावता । विदाहः प्र० । रोगः शरीरे कृशता । वैगन्धः शरीरे दुर्गन्धता । संक्लेदः क्लेदः । विपाकः । [8]‡रौक्ष्यं, दुर्धरता । प्रलापो विस्मरणेन जल्पः । [9][पीतभावः] शरीरपीतता । एतानि लक्षणानि [10]पित्तोद्रेके ॥ १४५ ॥

श्वेतत्वं शरीरपाण्डुता । शीतत्वं शीतलभावः । गुरुत्वं जाड्यभावः । कण्डूश्च खर्जूः । स्नेहोपदेहः शरीरे स्निग्धत्वम् । स्तिमितत्वं

* अयं श्लोकोऽपि द्वियारं मातृकासु दृष्टस्सन् सटीकोऽत्र परिगणितः । 'ई. क' मातृकयोरेष श्लोकः अत्र न दृश्यते ।

† 'ई. क.' मातृकयोरेव श्लोकोऽत्र नास्ति ।

‡ 'कोप' शब्दव्याख्यास्थानावसरे रौक्ष्यपदग्रहणकारणं न विभाव्यते ।

1 परिस्रव–प.
2 रोग–इ, राग–प.
3 वैगन्ध्य–इ. दौर्गन्ध्य–प.
4 कोपाः–इ.
5 पित्तभावा–इ.
6 स्नेहत्वपीतत्व–अ.
7 लेपाः–इ.
8 कौध्यं–अ.
9 [लु]वपितः–अ, पीत–आ.
10 पीत्ते–अ.

[1]उत्सेध[2]सङ्घातचिरक्रियाश्च
कफस्य कर्माणि वदन्ति तज्ज्ञाः ॥ १४७ ॥

*एतानि लिङ्गानि च [3]यत्कृतानां
सर्वामयानामपि नैकनाम्नाम् ।
कश्चिद्भवे[4]त्प्राप्तिविशेष एषां
[5]संज्ञान्तरं येन तु [6]प्राप्नुवन्ति ॥ १४८ ॥

[आमव्याधिकारणम्]

†आलस्यतन्द्राहृदयाविशुद्धि-
[7]दोषप्रवृत्त्याकुलमूत्रताभिः ।
गुरूदरत्वारुचिसुप्तताभि
रामान्वितं [8]व्याधिमुदाहरन्ति ॥ १४९ ॥

---

आलस्यम् । गमनजल्पनादिक्रियायां मन्दोत्साहता । लेपः शरीरे [9]पृथुलता । उत्सेधः उन्नतत्वम् । सङ्घातचिरक्रियाश्च मूत्रपुरीषयोः स्थिरत्वेन प्रवर्तनम् । एतानि श्लेष्मरोगे जातानि ॥ १४७ ॥

---

* श्वेतत्वशीतत्वेति श्लोकानन्तरं 'इ' मातृकायां 'प' पुस्तके च उत्तरत्र वक्ष्यमाणाः श्लोकाः दृश्यन्ते । अन्तिमः श्लोकः सर्वसमानः ।

† अयं श्लोकः पूर्वमेव अन्यमातृकासु प्रविष्टः अस्माभिः (सं २८) मुद्रितश्च । परन्तु पाठभेदोऽस्ति ।

---

1 उत्सेधनं पाक–आ. उत्सेक–प
2 सन्ताप–अ.
3 तत्कृतानि–प.
4 प्राप्तविशेषगेषां–इ.
5 संज्ञातुरं–इ.
6 सम्प्रयान्ति–प.
7 दोषप्रवृत्तिशुद्भावमूत्रैः–प.
8 तद्विदुषा वदन्ति–प.
9 मृदुता–आ.

[वातशमनविधानम्]

स्निग्धोष्णस्थिरवृष्यबल्यलवणस्वाद्वम्लतैलातप-
स्नानाभ्यङ्गनवस्तिमांसमदिरासंवाहनो[1]न्मर्दनम् ।
स्नेहस्वेदनिरूहनस्य[2]शयनस्थानोपनाहादिकं
पानाहारविहारभेषजमिदं वातं प्रशान्तिं नयेत् ॥ १५० ॥

[पित्तशमनविधानम्]

तिक्तस्वादुकषायशीतपवनच्छाया[3]निशावीजनं
ज्योत्स्नाभूगृहयन्त्रवारि[4]जलजस्त्रीगात्रसंस्पर्शनम् ।
सर्पिः क्षीरविरेकसेकरुधिरस्रावप्रदेहादिकं
पानाहारविहारभेषजमिदं पित्तं प्रशान्तिं नयेत् ॥ १५१ ॥

[श्लेष्मशमनविधानम्]

रूक्षक्षारकषायतिक्तकटुकव्यायामनिष्ठीवनं
स्त्रीसेवाध्वनियुद्धजागरजलक्रीडापदाघातनम् ।
धूमात्युष्णशिरोविरेकवमनस्वेदोपवासादिकं
पानाहारविहारभेषजमिदं श्लेष्माण[5]मुग्रं जयेत् ॥ १५२ ॥

---

[1] न्मर्दनैः—प.  [2] शमनस्नेहोप—प.

[3] विजे :—इ.  [4] जलद—प.

[5] मृत्युं—ई.

[त्रिदोषविकारे शमनविधानम्]

कफप्रकोपे वमनं सनस्यं विरेचनं पित्तभवे विकारे ।
वातात्मके बस्तिमुदाहरन्ति ससंर्गजेऽपि व्यतिमिश्रमेतत् ॥ १५३ ॥

हेमन्तवर्षाशिशिरेषु वायोः पित्तस्य तोयान्तनिदाघयोश्च ।
कफस्य कोपः कुसुमागमेऽपि कुर्वीत यद्यद्विहितं तथैषाम् ॥ १५४ ॥

*होमोपवासनियमाः प्रायश्चित्तं तपो व्रतम् ।
देवद्विजार्चनं मन्त्रं बलिः स्वस्त्ययनानि च ॥ १५५ ॥

[भिषजं प्रति हितोक्तिः]

[1]बुध्वैतदन्यदपि [2]यत्तद[नु]क्तमत्र
युक्त्याः स्वयं समधिगम्य यथानुरूपम् ।
रोगेषु भेषजमनल्पमतिर्विदध्यात्
शास्त्रं हि किञ्चिदुपदेशवशं करोति ॥ १५६ ॥

---

* 'प' पुस्तके श्लोकोऽयं नास्ति । तत्स्थाने—
वातोऽम्लतैललवणैर्मधुरान्नपानैः
पित्तं तथा मधुरतिक्तकषायशीतैः ।
श्लेष्मापि तिक्तकटुरूक्षकषायतीक्ष्णैः
आमः प्रशान्तिमुपयात्यपतर्पणेन ॥ इति दृश्यते ।

---

1 युद्वेत—इ.    2 यत्तदउक्त—इ. मद्यदनुक्त—प.

[ग्रन्थसमाप्तिः]

गुणाधिकं योगशतं निबध्य-
प्राप्तं मया [1]पुण्यमनुत्तमं यत् ।
नानाप्रकारामयनीडभूतं
कृत्स्नं जगत्तेन [2]भवत्वरोगम् ॥ १५७ ॥

॥ इति [3]श्रीपण्डितरायविरचितं योगशतकं समाप्तम् ॥[4]



---

[1] पुण्यमिहोत्तमं–अ, पुण्य...त्तरं–प.
[2] भवत्व–आ. [3] श्रीपण्डितविरचिते–अ.
[4] श्रीवेङ्कटेशाय नमः । योगशतक टीकु २२ आछुल्कु समाप्तम्–अ,
श्रीरामचन्द्रचरणारविन्दार्पणमस्तु–आ.

# अनुबन्धः

1) अधिकपाठः

2) पाठान्तराणि

3) श्लोकसूची

4) पारिभाषिकपदसूची

[ विषगर्भतैलप्रकारः ]

*कनकस्य च निर्गुण्डी तुम्बिनी च पुनर्नवा ।
वातारिश्चाश्वगन्धा च पुन्नाटं सचित्रकम् ॥ १ ॥

शोभाञ्जन काकमाची कळिकारी च निम्बकम् ।
महानिम्बाश्वरी (?) चैव दशमूलशतावरी ॥ २ ॥

कारवल्ली सरीवा च श्रावणी च दक्षाप्ळिका (?) ।
वज्रार्कौ मेषशृङ्गी च करवीरद्वयं वचा ॥ ३ ॥

काकजङ्घा त्वपामार्गबला चातिबलाद्वयम् ।
व्याघ्री महाबला वामा सोमवल्ली सारिणी ॥ ४ ॥

पलोन्मितानि चैतानि द्रोणेऽम्भसि विनिक्षिपेत् ।
पचेत्पादावशेषेऽस्मिन् कल्कस्य कुडव क्षिपेत् ॥ ५ ॥

त्रिकटुं विषतिन्दुं च रास्ना कुष्ठं विष घनम् ।
देवदारु कळौंजी (?) च द्वौ क्षारौ लवणानि च ॥ ६ ॥

तुत्थकं कट्फलं पाठा भारङ्गी नवसारकम् ।
त्रायन्ती धन्वयासं च जीरकं चेन्द्रवारुणी ॥ ७ ॥

---

* योगशतस्य 'ई' मातृकायां वामभागे, योगशतग्रन्थसमाप्त्यनन्तरमपि 'योगशते विषगर्भतैलप्रकार' इति नाम्ना एतत्तैलविधिः निरूपितो दृश्यते ।

तैलप्रस्थं समादाय पाचयेन्मृदुवह्निना ।
विषगर्भमिदं नाम्ना सर्ववातान् व्यपोहति ॥ ८ ॥

कुक्ष्यूरुकटिजङ्घा च सन्धानं श्रोत्रमेव च ।
गृध्रसी च महावातान् सर्वाङ्गस्फुटनं तथा ॥ ९ ॥

दण्डापतानकं चैव कर्णनादं च शून्यताम् ।
वनमध्ये यथा सिंह परळत्ये ? यथा मृगाः ॥ १० ॥

तथाश्वगजभग्नानां नराणां च चतुष्पदाम् ।

इति विषगर्भतैलम् ॥

---

'प' पुस्तशद्वकेनोयमाऽधिकः पाठः

हिङ्ग्वग्रगन्धाविडशुण्ठ्यजाजी-
हरीतकीपुष्करमूलकुष्ठम् ।
भागोत्तरं चूर्णितमेतदिष्टं
गुल्मोदराजीर्णविषूचिकासु ॥ २० ॥

(अयं श्लोकः 'इ' मातृकायामपि दृश्यते)

द्विरुत्तरा हिङ्गु वचा सकुष्ठा
सुवर्चिका चैव विडङ्गचूर्णम् ।
उष्णाम्बुनानाहविसूचिकार्ति-
हृद्रोगगुल्मोर्ध्वसमीरणघ्नम् ॥ २३ ॥

गोक्षुरकः क्षुरकः शतमूली
वानरि नागबलातिबला च ।
चूर्णमिदं पयसा निशि पेयं
यस्य गृहे मदाशतमस्ति ॥ ७७अ ॥

निम्बस्य तैलं प्रकृतिस्थमेव
नस्ये निषिक्तं विधिना यथावत् ।
मासेन तत्क्षीरघृतोपयोज्यां
जराप्रभूतं पलितं निहन्ति ॥ ८० ॥

श्रेष्ठः पर्पटको ज्वरेषु विहितस्तृष्णासु पञ्चाम्लको
लाजाश्छर्दिषु वस्तिजेषु गिरिजं मेहेषु धात्रीरसः ।

रास्ना वातगदेषु मूत्रमुदरे प्लीहामये पिप्पली
सन्धाने क्रिमिहा विषे शुकतरुः शोफे तथा गुग्गुलुः ॥ ८७॥

वृषोऽस्रपित्ते कुटजोऽतिसारे
भल्लातकोऽर्शःसु गरेषु हेमः ।
स्थौल्येषु दारुः क्रिमिषु क्रिमिघ्न
हरीतकी पाण्डुगदेषु शस्ता ॥ ८८ ॥

अक्ष्यामयेषु त्रिफलां वदन्ति
सर्वेषु शूलेषु तथा रसोनम् ।
कुष्ठेषु नित्यं खदिरस्य सारं
सर्वेषु कासेषु निदिग्धिकां च ॥ ८९ ॥

शसन्ति वाजीकरणे श्वदंष्ट्रा-
मुरःक्षते नागबलां बलां वा ।
रसायनेष्वामलकं सदैव
सर्वेषु रोगेषु शिलाह्वयं च ॥ ९० ॥

वातोऽम्लतैललवणैर्मधुरान्नपानैः
पित्तं तथा मधुरतिक्तकषायशीतैः ।
श्लेष्मापि तिक्तकटुरूक्षकषायतीक्ष्णै-
राम: प्रशान्तिमुपयात्यपतर्पणेन ॥ १०७ ॥

'प' पुस्तके दृश्यमानं पाठान्तरम् ।

श्लोकसंख्या १–८० तमपर्यन्तम् ।

८१ तमश्लोकादारभ्य आन्तं तत्तद्-स्थलेष्वेव पाठभेदः सूचितोऽस्ति ।

| श्लोकसंख्या मुद्रितग्रन्थे | 'प' पुस्तके | मुद्रितपाठः | 'प' पुस्तकपाठः |
|---|---|---|---|
| २३ | ३ | यावशूकैः | धन्वयासैः |
| ३० | ६ | द्राक्षामृता | द्राक्षाभया |
| ३७ | ११ | आमानुबन्धे | ज्वरानुसक्ते |
| ४४ | ९ | निशान्तकल्कं | निशांशकल्कं |
| ५० | १८ | तण्लडुलिकस्य | तण्डलीयस्य |
| | | क्षौद्रान्वितं | क्षुद्रान्वितं |
| | | भार्ङ्गी | भार्गी |
| ५१ | १० | स्तनरुक्प्रबन्धे | स्तनरुक्षु पेयः |
| ४९ | २१ | देयं | पेयं |
| ५२ | २२ | लवणप्रधानं | लवणोपधानं |
| ५४ | २५ | गुल्मोदराष्ठीलिषु | गुल्मोदरप्लीहिषु |
| ६० | २६ | गुडप्रमृदितं | गुडप्रमुदितं |
| ६१ | २७ | मूलानुगं | मूलं तुगा |
| | | गुडप्रमृदितं | त्रिगुणितां |
| | | त्रिसुगन्धयुक्तं | गुटिकां सुगन्धां |
| | | ज्वरमाशु हन्यात् | ज्वररुक्षु दद्यात् |

| श्लोकसंख्या | | | |
|---|---|---|---|
| मुद्रितग्रन्थे | 'प' पुस्तके | मुद्रितपाठः | 'प'पुस्तकपाठः |
| ७१ | २८ | क्रमविवर्धितभागमन्त्यात् | क्रम.मूर्ध्वमन्त्यात् |
| ७५ | ३१ | दाडिमं | दाडिमां |
| | | नित्यमिष्टम् | नित्यमद्यात् |
| ७८ | ३२ | गुडेन चेत्थं | गुडेन बद्धा |
| ७९ | ३३ | समाक्षिका | सुसंहिता |
| ८१ | ३६ | कृतः कषायः | तदा युतश्च |
| ८२ | ३७ | कुठेरकाः | कुठेरिकाः |
| | | बद्धमूलाः | बद्धमूलान् |
| ८३ | ३८ | दुष्टव्रणारुः | दुष्टव्रणानां |
| ८४ | ३९ | कण्डूस्रवत्पिटकिका | कच्छुं स्रवत्पिट- |
| | | लघुशुष्कखर्जूः | कितामथवापि शुष्कां |
| ८७ | ४२ | अमृतलतिकामलकी | त्वगमृतमामलकी |
| ८८ | ४३ | पिचुमन्द | – पिचुमर्द |

## योगशतकस्य पद्यानुक्रमणी

# योगशतकस्य पारिभाषिकशब्दानां सूचनी

(संख्या—श्लोकसंख्या)